सर्वतन्त्रस्वतन्त्र-श्रीजगदीशतर्कालङ्कारविरचिता

# अवच्छेदकत्वनिरुक्तिः



वाराणसीस्थ श्रीसंन्यासि-संस्कृत-महाविद्यालयीयदर्शन-
विभागाध्यक्ष-न्यायवेदान्तचार्य
श्री-दत्तात्रेय-शास्त्री-ओगले-
( स्वामी दिव्यानन्द )
कृतया-लक्ष्मीटीकया च समलङ्कृता

साचेयम्—
श्री-संन्यासि-संस्कृत-महाविद्यालयीय-महोदयैः
स्वामी-श्रीधर्मानन्दमहाभागैः सम्पादिता

प्रकाशकः—

श्री दत्तात्रेय शास्त्री ( स्वामी दिव्यानन्द )

संन्यासि-संस्कृत-महाविद्यालय, ढुण्ढीराजगली, वाराणसी।

( श्रीकृष्ण निवास आश्रम, कनखल, हरिद्वार )



प्राप्तिस्थानम्—

श्री भारतीय विद्या प्रकाशन, चौक, वाराणसी।

ई० सन् १९६८ सं० २०२५

मुद्रकः—

गीताधर्म प्रेस, मिश्रपोखरा, वाराणसी।

# भूमिका

जनकः प्रभुदत्तः श्रीर्नाह्वीदेवी च यत्प्रसूः।
ज्वालाप्रसादगौड़ोहं तं वन्दे बुद्धिदं गुरुम्।

अवच्छेदकत्वनिरुक्तिप्रकरणमिदं सिद्धान्तलक्षणस्यावशिष्टो भागः। तत्र च हेतुव्यापकसाध्यसामानाधिकरण्यरूपा मूलकृदुक्ता व्याप्ति र्व्याख्याता दीधितिकृता। परिष्कृता च तर्कालंकारेण। तत्र व्यापकत्वं द्विविधम्। अत्यन्ताभावघटितं,भेदघटितं च। स्वाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वमाद्यम्। अपरं च स्वाधिकरणवृत्त्यन्योन्याभावप्रतियोगितानवच्छेदकत्वम्। उभयत्र स्वपदग्राह्यो व्याप्यत्वेनाभिमतो हेतुः।

अत्राद्यमेव परिष्कृतम्— तथाहि— प्रतियोगिव्यधिकरण हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्युक्तम्। अत्र प्रतियोगितानवच्छेदकमित्यत्र प्रतियोगितायाः न अवच्छेदकमिति त्रिपद तत्पुरुषः। समासान्तर्गत नञामुत्तरपदार्थान्वयित्वेन प्रतियोगितावच्छेदकभिन्नमित्यर्थः। तत्रावच्छेदकत्वं स्वरूपसंबन्धविशेषः, अनतिरिक्तवृत्तित्वरूपं वेति जिज्ञासायां प्रकरणमिदं निर्मितं दीधितिकृता। व्याख्यातं च तर्कालंकारेण।

अवच्छेदकता द्विविधा। स्वरूपसंबन्धविशेपरूपा, अनतिरिक्तवृत्तित्वरूपा च। स्वरूपसंबन्धविशेषत्वं च क्लृप्तपदार्थः सन् किञ्चिद्धर्मोपरागेण संसर्गतावत्त्वम्। यथा प्रतियोगित्वादौ। प्रतियोगितायाः प्रतियोगिस्वरूपत्वेन क्लृप्तपदार्थत्वात्,प्रतियोगितात्वेन संसर्गत्वाच्च।

अत्र जगदीशः। अयमाशयः, नन्वत्र प्रतियोगित्वं नातिरिक्तः पदार्थः, प्रतियोगित्वादिकं तु स्वरूपसंबन्धविशेष इत्याद्युत्तरग्रन्थविरोधात्। किन्तु स्वरूपसंबन्धविशेषस्तत्प्रतियोगित्वं प्रतियोगिरूपं प्रतियोगितावच्छेदकरूपं वा। नाद्यः— असंभवापत्तेः। संयोगेन

घटाद्यभावप्रतियोगितायाः घटरूपत्वेन घटत्वावच्छिन्नत्ववत्प्रमेयत्व-द्रव्यत्वाद्यवच्छिन्नतया प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः ।

न द्वितीयः—समवायेन वन्हेः साध्यत्वे धूमादावतिप्रसंगात् । समवायेन वन्ह्यभावप्रतियोगितायाः वन्हित्वरूपत्वे संयोगेन वन्ह्य-भावप्रतियोगिताया अपि वन्हित्वरूपत्वेन संयोगस्यापि तदवच्छेद-कतया प्रतियोगितावच्छेदकीभूतसंयोगसंबन्धेन वन्हित्वावच्छिन्नानधि-करणत्वाभावाद्धेतुमतः पर्वतस्य प्रतियोगितावच्छेदकीभूतयत्किञ्चि-त्संबन्धेन प्रतियोग्यनधिकरणत्वोक्तौ तुल्य युक्त्या वन्हिमान् धूमादि-त्यादावव्याप्तिरिति चेन्न । प्रतियोगित्वं-प्रतियोगिस्वरूपं प्रतियोगिता-वच्छेदकस्वरूपं वास्तु परन्तु तन्न सर्वेण धर्मेणावच्छिन्नम्, घटाभाव-प्रतियोगित्वं न द्रव्यत्व प्रमेयत्वाद्यवच्छिन्नमिति व्यवहारात्, तथा च संयोगेन घटाद्यभावप्रतियोगित्वस्य घटस्वरूपत्वेपि तदीयप्रति-योगितावच्छेदकत्वं घटत्वादेरेव न तु द्रव्यत्व प्रमेयत्वादेरतो घट-त्वावच्छिन्नानधिकरणत्वाद् घटाभावस्य प्रतियोगिव्यधिकरणत्वादेव-च नाऽसंभवः । एवं वन्ह्यभावप्रतियोगित्वं न सर्वेण संबन्धेनाव-च्छिन्नमिति व्यवहारात्, समवायेन वन्ह्यभावप्रतियोगित्वस्य संयो-गेनानवच्छिन्नत्वान्नाप्यतिव्याप्तिः ।

तथा च यदभावीय यत्प्रतियोगितावच्छेदकसंबन्धेन यदभावीय साध्यतावच्छेदकसंबन्धावच्छिन्नयत्प्रतियोगितावच्छेदकावच्छिन्नानधि-करणं हेत्वधिकरणं तदभावीय तत्प्रतियोगितावच्छेदकताशून्यं यत्सा-ध्यतावच्छेदकमित्यादि ।

न च प्रतियोगितावच्छेदकरूपं यदि प्रतियोगित्वं तदा यदभावीय यत्प्रतियोगित्वावच्छिन्नानधिकरणमित्येव कथं नोक्तम्, प्रतियोगिता-वच्छेदकावच्छिन्नत्वप्रवेशस्य नासिकास्पर्शतुल्यत्वादिति वाच्यम् । वन्हिधूमोभयवान् वन्हेरित्यादावतिव्याप्त्यापत्तेः । हेत्वधिकरणतप्तायः पिण्डस्य वन्हिधूमोभयत्वावच्छिन्नाभावप्रतियोगित्वावच्छिन्नाधिकरण-त्वात् । अयं भावः । उभयाभावप्रतियोगित्वस्योभयत्वरूपत्वेपि उभयत्वत्वेनैवोभयत्वावच्छिन्नाधिकरणत्वमयोगोलकादौ नाभ्युपेयते 'वन्हिधूमोभयवदयोगोलकमित्यप्रत्ययात् । प्रतियोगितात्वेनोभयत्वा-वच्छिन्नाधिकरणत्वं तत्राभ्युपेयते, प्रतियोगितात्वेन तादृशोभयत्व-स्याऽव्यासज्यवृत्तितया 'वन्हिधूमोभयाभावप्रतियोगिमदयोगोलक'-

मिति प्रत्ययात्। प्रतियोगितावच्छेदकीभूततादृशोभयत्वस्योभयतत्वेन व्यासज्यवृत्तितया तदवच्छिन्नाधिकरणत्वं न हेत्वधिकरणायोगोलकस्येति नातिव्याप्तिरित्यलम्।

प्रकृतमनुसरामः। स्वरूपसंबन्धरूपावच्छेदकताया अपि अवच्छेदकरूपत्वेन क्लृप्तपदार्थत्वात्, अवच्छेदकतात्वेन संसर्गत्वाच्च स्वरूपसंबन्धविशेषत्वम्। सा च प्रतियोग्यंशे प्रकारीभूतधर्मे— यथा घटाभावप्रतियोगितावच्छेदकता घटत्वे। क्वचिदप्रकारीभूतधर्मेपि—यथा कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकता घटत्वे। अतिप्रसङ्गाद्यनापादके लघौ धर्मेऽवच्छेदकत्वे संभवति सति गुरौ अवच्छेदकत्वाभावादिति नियमात्। प्रतियोगितावच्छेदको धर्मः सर्वथापि प्रतियोगितासामानाधिकरण्यं न व्यभिचरति।

लघुधर्मनिष्ठावच्छेदकत्वे संभवत्वं च "लघुधर्मवृत्ति" भेदप्रतियोगितावच्छेदकतावत्त्वम्। अवच्छेदकता च स्वनिष्ठापादकताकाऽऽपत्तीयविशेष्यत्वसंबन्धावच्छिन्ना। स्वं आपादकम्। "प्रकृते कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वम्"। द्रव्यत्वं यदिकंबुग्रीवादिमदभावप्रतियोगितावच्छेदकतावत्स्यात्तदा घटशून्य "द्रव्यवद्" भूतल निष्ठाभावप्रतियोगितावच्छेदकतावत्स्यादित्यापत्तीय विशेष्यतया द्रव्यत्वे वर्त्तमानतया तादृशविशेष्यतासंबन्धेन कंबुग्रीवादिमदभावप्रतियोगितावान्नेतिभेदस्य घटत्वे सत्वेन तादृशभेदप्रतियोगितावच्छेदकत्वस्य कंबुग्रीवादिमदभावप्रतियोगितानिरूपितघटत्वनिष्ठावच्छेदकत्वे सत्त्वात्तत्संगतिः।

लघुत्वं च स्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वम्। स्वं गुरुधर्मः। वृत्तित्वं च रूपे। स्वविषयकग्रहत्वव्यापकसंख्यात्वावच्छिन्नाऽवृत्तिसंख्याविभाजकधर्मवत्वम्। स्वं लघुधर्मः। संख्यायां ग्रहत्वव्यापकत्वं च स्वाश्रयनिष्ठविषयताकत्वसंबन्धेन। स्वं–संख्या। तथा च कंबुग्रीवादिमत्त्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं कम्बुग्रीवादिमत्वगतसमुदायत्वं बहुत्वं वा तद्वृत्तित्वं तद्घटत्वेऽस्ति, घटत्वविषयकग्रहत्वव्यापकैकत्वसंख्याऽवृत्तिसंख्याविभाजकधर्मः तादृशसमुदायत्वत्वं बहुत्वत्वं वा तद्वत्वं समुदायस्य इति।

तद्धर्मावच्छिन्नप्रकारतावच्छेदकता प्रतियोगिकपर्याप्त्यनुयोगिता-

वच्छेदकसंख्यासामान्यनिष्ठभेदप्रतियोगितावच्छेदकसंख्यात्वव्याप्य - जातिमत्प्रकारताश्रयत्वं तद्धर्मापेक्षया गुरुत्वम् । तद्धर्मपदेन लघुधर्मो ग्राह्यः । यथा घटत्वावच्छिन्नप्रकारतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकघटत्वगतैकत्वसंख्यानिष्ठभेदप्रतियोगितावच्छेदकबहुत्वत्वजातिमत्प्रकारताश्रयत्वं कंबुग्रीवादिमत्त्वेऽस्तीति ।

अत्र सामान्यपदानुपादाने कम्बुग्रीवादीमत्त्वावच्छिन्नप्रकारतावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकबहुत्वसंख्यानिष्ठभेदप्रतियोगितावच्छेदकैकत्वत्वजातिमत्प्रकारताश्रयत्वस्य घटत्वे सत्वाद् घटत्वस्य गुरुत्वापत्तिरतः सामान्यपदम् । तथा च सामान्यान्तर्गताया एकत्वसंख्याया लाभान्न दोषः । न्यूनवारकपर्याप्त्यनिवेशादित्यस्मत्परमगुरुवः ।

तथा च घटत्वं कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकं कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेद - विशिष्टकिञ्चिदवधिकगुरुत्वाभाववत्वात् । वै०सामानाधिकरण्यसं० । अवच्छेदकता च स्वनिष्ठापादकताकापत्तीयविशेष्यतासंबन्धावच्छिन्ना । स्वं कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वम् । यो यदभावप्रतियोगितावच्छेदकत्वनिष्ठा या स्वनिष्ठापादकताकापत्तीयविशेष्यतासंबन्धावच्छिन्नावच्छेदकता तादृशावच्छेदकताकप्रतियोगिताकभेदवान् सः तदभावप्रतियोगितानिरूपितस्वरूपसंबन्धरूपावच्छेदकतावान् इति सामान्य व्याप्तिः पर्यवसिता । पटत्वं यदि कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकं स्यात् तदा पटवद्वृत्त्यभावप्रतियोगितावच्छेदकतावत्स्यादित्यापत्तिविशेष्यतायाः पटत्वे सत्वेन स्वपदग्राह्य कंबुग्रीवादिमदभाव प्रतियोगितावच्छेदकत्वनिष्ठापादकताकापत्ति विशेष्यतासंबन्धेन कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकतावान्नेति भेदस्य घटत्वे सत्वेन् तत्र कंबुग्रीवादिमदभावप्रतियोगितानिरूपितस्वरूपसंबन्धरूपावच्छेद - कताप्यस्तीति ।

घटत्वं यदि कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकतावत्स्यादित्यापादकसत्त्वेपि आपत्तिविरहेण तादृशापत्तीय विशेष्यत्वस्यापि घटत्वे विरहात्तादृशापत्तीय विशेष्यतासंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकभेदस्य "कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकतावा-

न्नेत्याकारकस्य" घटत्वे सत्त्वात्तत्र कंबुग्रीवादिमदभावप्रतियोगितानिरूपितस्वरूपसंबन्धरूपावच्छेदकतासत्त्वात्सर्वमुपपन्नम् ।

भेदवैशिष्ट्यनिवेशाद् घटत्वापेक्षया कंबुग्रीवादिमत्त्वस्य न गुरुत्वापत्तिरित्यन्यत्र विस्तरः ।

अत्र पटत्वं पटवद्वृत्त्यभावप्रतियोगितावच्छेदकतावत्स्यादित्यापत्तिर्बोध्या । आपत्तिं प्रति आपाद्यव्याप्याऽऽपादकवत्तानिश्चय कारणम् । स च प्रकृते पटवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वव्याप्यकंबुग्रीवादिमदभावप्रतियोगितानिरूपितस्वरूपसंबन्धरूपावच्छेदकतावानित्याकारकः । आपत्तिं प्रतिआपाद्यव्यतिरेकनिश्चयश्च कारणम् । स च पटत्वं पटवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वाभाववदित्त्याकारकः । न च तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयस्य प्रतिबन्धकत्त्वात्कथमियमापत्तिरिति वाच्यम् । अनाहार्यतद्वत्ताबुद्धिं प्रत्येव तस्य प्रतिबन्धकत्वात् । आपत्तिस्तु बाधकालीन इच्छाजन्या । सा च पटवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वाभाववति पटत्वे पटवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वज्ञानं जायतामित्याकारा । तादृशापत्तिं प्रति तर्कः कारणम् । सचोक्त एवेति संक्षेपः

अथ स्वरूपसंबन्धरूपावच्छेदकत्वनिवेशे हेतुमन्निष्ठाभावप्रतियोगितानिरूपितस्वरूपसंबन्धरूपावच्छेदकताशून्यसाध्यतावच्छेदकेत्यादिलक्षणम् ।

एवं च लघुधर्मस्य प्रतियोगितावच्छेदकत्वे प्रमेयधूमवान् वन्हेरित्यादावतिव्याप्तिः, लघुतया हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधूमत्वभेदस्य प्रमेयधूमत्वे सत्वात् । नचाऽनतिरिक्तवृत्तित्वरूपावच्छेदकत्वं निवेशनीयम्, तथा च तादृश प्रतियोगित्वाभाववदवृत्तिर्यो धर्मस्तदन्यत्वं साध्यतावच्छेदके निवेशनीयम् । तथा च हेतुसमानाधिकरणाभावप्रतियोगितात्वसमानाधिकरणोभयावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववदवृत्तित्वमेव पारिभाषिकावच्छेदकत्वं तदन्यत्वं साध्यतावच्छेदके विवक्षणीयमित्यदोष इति वाच्यम् । स्वरूपसंबन्धात्मकप्रतियोगितायाः प्रतियोगिभेदेन भिन्नत्वे तादृशप्रतियोगित्वाभाववति धूमान्तरे धूमत्वस्य वर्तमानतयाऽतिप्रसंगतादवस्थ्यात् । सामान्याभावीयप्रतियोगिता प्रतियोग्यभावोभयरूपा । विशेषाभावीयप्रतियोगिता केवलप्रतियोगि-

स्वरूपेति वक्ष्यमाणत्वात्। न हि सा प्रतियोगितावच्छेदकरूपा, प्रतियोगितायाः प्रतियोग्यभावयोः संबन्धतया तदतिरिक्तस्वरूपत्वे मानाभावात्। प्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वार्थकत्वे तेजो-घटोभयाभावीय प्रतियोगितासामान्याभाववति वन्हित्वस्यावृत्तेर्वन्हिमान् धूमादित्यादावसंभवः। न च प्रतियोगिताव्यापकत्वे सति प्रतियोगिताव्याप्यत्वं तदिति वाच्यम्। एवमपि तार्णतार्णोभयाभाव-मादायाव्याप्तितादवस्थ्यादिति चेत् सत्यम्।

प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य विवक्षितत्वात्। हेतुम-न्निष्ठाभावप्रतियोगितावच्छेदकं यद्यत्तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगि-ताकाभाववदवृत्तित्वं तदर्थः।

अत्र प्रतियोगितावच्छेदकनिष्ठप्रतियोगिता स्वप्रतियोगितावच्छेद-कतावच्छेदकसंबन्धावच्छिन्नाग्राह्या। अन्यथा धूमवन्निष्ठाभावप्रति-योगितावच्छेदकीभूतघटत्वादिनिष्ठकालिकसंबन्धावच्छिन्नप्रतियोगिता-काभाववति आत्मादौ वन्हित्वस्याऽवृत्त्याऽव्याप्तिप्रसंगात्। न च घट-त्वस्य न वन्हित्वसमानवृत्तिकत्वमिति वाच्यम्। आदिनामहानसीय वन्हित्वस्य परिग्रहात्। तथा च पर्याप्तिसंबन्धेन तार्णतार्णोभयत्वाभाव वति प्रत्येकवन्हौ वन्हित्वस्य वृत्तित्वान्नाव्याप्तिः। न च तार्णतार्णोभ-यत्वाभावो न प्रत्येकवन्हौ, प्रत्येकावृत्तित्वे समुदायावृत्तित्वप्रसंगात्, समुदायस्य प्रत्येकानतिरिक्तत्वादिति वाच्यम्। हेतुमन्निष्ठाभावप्र-तियोगितावच्छेदके स्वसमानवृत्तिकत्वस्य विशेषणीयत्वात्। अनतिरि-क्तवृत्तित्वेनाभिमतः स्वपदार्थः। तथा च हेतुमन्निष्ठाभावप्रतियोगिताव च्छेदकं यद्धर्मसमानवृत्तिकं स धर्मः पारिभाषिकावच्छेदकः तदन्यसाध्य-तावच्छेदकेत्यादि। स्वसमानवृत्तिकत्वं च स्वप्रतियोगिकपर्याप्त्यनुयो-गितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वम्। तार्ण-तार्णोभयत्वादिकं न वन्हित्वसमानवृत्तिकम्, वन्हित्वपर्याप्त्यनुयो-गितावच्छेदकतत्तद्वन्हित्वावच्छेदेन तार्णतार्णोभयत्वादेरपर्याप्तत्वात्, किन्तु उभयत्वसमानवृत्तिकमेव तत्। इत्यदोषः।

यद्यपि प्रत्येकवन्हौ पर्याप्तिसंबन्धेन तार्णतार्णोभयत्वाभावसत्वे तादृशोभयत्वाभाववति। प्रत्येकवन्हौ वर्तमानतया वन्हित्वादेः पारि-भाषिकावच्छेदकत्वाऽसंभवात्स्वसमानवृत्तिकेति व्यर्थम्, तथापि प्रत्यकस्मिन्नपि वन्हौ तार्णतार्णोभयत्वाभावो न स्वीक्रियते, अन्यथा

समुदायस्य प्रत्येकानतिरिक्ततया इमौ न द्वौ इति प्रतीत्यापत्तेः। तथा च तार्णातार्णोभयत्वस्य प्रत्येकवृत्तितया तार्णातार्णोभयत्वाभाववति घटादौ वन्हित्वादेरवृत्तित्वात्तस्य पारिभाषिकावच्छेदकत्वापत्तिरत-स्वसमानवृत्तिकत्वं विशेषणीयमिति भावः।

इदमत्रावधेयम्। प्रत्येकस्मिन्नपि द्वित्वपर्याप्तिर्द्वित्वावच्छेदेनैव स्वीक्रियते न तु प्रत्येकवृत्ति धर्मावच्छेदेन। अत एवाऽयं न द्वौ इति प्रतीतेः प्रमात्वमुपपद्यते, इदन्त्वावच्छेद्यपर्याप्तिसंबन्धेन द्वित्वाभाववति द्वित्वाभावप्रकारकत्वात्। उपपद्यते चाऽयं द्वौ इति प्रतीतेरप्रमात्वम्, इदन्त्वावच्छेद्यपर्याप्तिसंबन्धेन द्वित्वाभाववति द्वित्वप्रकारकत्वात्।

न च तार्णातार्णोभयत्वस्य वह्नित्वसमानवृत्तिकत्वाभावादेवासंभव-वारणादनतिरिक्तवृत्तित्वदलवैयर्थ्यमिति वाच्यम्। पर्वते महानसीय-वन्हि, चत्वरीयवन्हि, एतदन्यतराभावमादाय तद्दोषतादवस्थ्यात् अन्यतरत्वस्याव्यासज्यवृत्तितया वन्हित्वसमानवृत्तिकत्वात्। तथा च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकविशिष्टो धर्मः पारिभाषि-कावच्छेदकः तदन्यसाध्यतावच्छेदकेत्यादि। वै० स्वानतिरिक्तवृत्तित्व-स्ववृत्तित्वोभयसं०। स्ववृत्तित्वं स्वसमानवृत्तिकत्व सं०।

न च स्ववृत्तित्वं स्वसाजात्यसंबन्धेनैवोच्यताम्, साजात्यं च व्यासज्यवृत्तित्वतदन्यत्वान्यतररूपेणेति वाच्यम्। वन्हिधूमो-भयवान् धूमादित्यत्र वन्हिधूमघटएतत्त्रितयाभावमादायाव्याप्तिप्रसं-गात्। त्रित्वस्य द्वित्वसजातीयत्वात्।

वस्तुतः समवायेन प्रमेयसाध्यकभावत्वादि हेतौ हेतुमन्निष्ठाभाव-प्रतियोगितावच्छेदक प्रमेयत्वाभावाप्रसिद्ध्याऽभावान्तरमादायाति-व्याप्तिवारणाय प्रतियोगितावच्छेदकानतिरिक्तवृतित्वमित्यस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यद्धर्मव्यापकमित्यर्थो वाच्यः, तथा च वह्निधूमोभयवान् वह्नेरित्यादावतिव्याप्तिः, हेतुमन्निष्ठा-भावप्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं तन्न वह्निधूमोभयत्वव्यापकं तादृशोभयत्वाधिकरणे उभयस्मिन्प्रत्येकवृत्तिधर्मावच्छेदेन वह्निधूमो-भयत्वाभावसत्त्वात्। अतः स्वावच्छिन्नप्रतियोगित्वसंबन्धेनैव यद्धर्म-व्यापकत्वं वाच्यम, तथा च वह्निधूमोभयत्वस्य स्वावच्छिन्नप्रतियोगि-त्वसंबन्धेन वह्निधूमोभयत्वव्यापकत्वान्नातिव्याप्तिः। एवं च तादृश-

संबन्धेन तार्णातार्णोभयत्वस्यापि वह्नित्वव्यापकत्वादसंभववारणाय स्वसमानवृत्तिकत्वं विशेषणीयमिति निष्कर्षः।

प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यत्र प्रतियोगितावच्छेदकनिष्ठप्रतियोगितायां। संबन्धसामान्यावच्छिन्नत्वनिवेशेऽसंभव उक्त एव। यत्किंचित्संबन्धावच्छिन्नत्वनिवेशेऽतिव्याप्तिः, वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधूमत्वस्य संयोगेनाभाववति धूमे धूमत्वस्य वर्त्तमानत्वात्। अतः प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्ना सा ग्राह्या इत्युक्तप्रायम्। एवं प्रतियोगितावच्छेदकाभाववत्तास्वरूपेण, तेन कालिकेन धूमत्वाभावाधिकरणे धूमे एव धूमत्ववृत्तावपि नातिव्याप्तिः। प्रतियोगितावच्छेदकाभाववन्निरूपितवृत्तिता च साध्यतावच्छेदकताघटकसंबन्धावच्छिन्ना—तेन धूमत्वाभावस्य स्वरूपेणाधिकरणे जन्ये स्पन्दे वा कालिकेन धूमत्वस्य सत्त्वेऽपि नातिव्याप्तिः, साध्यतावच्छेदकताघटकसमवायेन धूमत्वस्यावर्त्तमानत्वात्।

परन्तु अस्मिन्कल्पे धूमवान् वन्हेरित्यादावतिव्याप्तिः, अव्यासज्यवृत्तिधर्मस्य पर्याप्त्यनंगीकारे स्वसमानवृत्तिकत्वमित्यत्र स्वपदेन धूमत्वस्य गृहीतुमशक्यत्वात्। एवं सत्तावान् जातेरित्यत्राव्याप्तिः। जातिमद् गुणादिनिष्ठाभावप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वाऽनतिरिक्तवृत्तित्वात्सत्तात्वस्य, विशिष्टसत्तात्वस्य च सत्तात्वसमानवृत्तिकत्वाच्च। उच्यते। हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाभाववन्निरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वसामान्याभाववद्यद्धर्मविशिष्टसामान्यं स धर्मः पारिभाषिकावच्छेदकः तदन्यसाध्यतावच्छेदकेत्यादि। वन्हिमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधूमत्वावच्छिन्नप्रतियोगिताकाभाववन्निरूपितवृत्तित्वसामान्याभावः प्रमेयधूमत्वविशिष्टेऽस्तीति प्रमेयधूमत्वस्य पारिभाषिकावच्छेदकत्वम्। सत्तावान् जातेरित्यत्र जातिमद् गुणादिनिष्ठाभावप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वावच्छिन्नप्रतियोगिताकाभाववन्निरूपितवृत्तितैव सत्तात्वविशिष्टे इति नाव्याप्तिः।

अत्र तादृशप्रतियोगितावच्छेदकाश्रयप्रतियोगिताकाभावेत्युक्तौ धूमवान् वन्हेरित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधूमत्वाश्रयधूमघटोभयाभाववत्पर्वतनिरूपितवृत्तित्वस्यैव धूमत्वविशिष्टे सत्वादतिव्याप्तिरतः तादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकाभावेति।

अयं घट एतत्वादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकी-भूतपटत्वावच्छिन्नस्य संबन्धसामान्येनाभाववत् गगनादिनिरूपित-वृत्तित्वसामान्याभावस्य घटत्वविशिष्टे सत्वादव्याप्तिवारणाय तादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगित्वं साध्यतावच्छेदकसं-बन्धावच्छिन्नं ग्राह्यम् ।

तादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाभावश्च प्रतियो-गिव्यधिकरणो बोध्यः तेन तादृशप्रतियोगितावच्छेदकीभूतधूमत्वा-वच्छिन्नप्रतियोगिताकाभाववदुत्पत्तिकालावच्छिन्नपर्वतनिरूपितवृत्ति-त्वस्यैव धूमत्वविशिष्टे सत्त्वेपि नातिव्याप्तिः ।

तदर्थश्च प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदका-वच्छिन्नासंबन्धी तदवच्छिन्नाभाववान् । तेन वह्निमन्निष्ठाभावप्रतियो-गितावच्छेदकीभूतधूमत्वावच्छिन्नस्य समवायेनाभाववत्पर्वतादिनिरू-पितवृत्तित्वस्यैव धूमत्वविशिष्टे सत्वेपि नातिव्याप्तिः, प्रतियोगिता-वच्छेदकीभूतसंयोगेन धूमाभावस्य पर्वतादावसत्वात् । द्रव्यं घटत्वादित्यादौ घटत्वाधिकरणवृत्तिघटान्यत्वविशिष्टद्रव्यत्वाभाव-प्रतियोगितावच्छेदकीभूतघटान्यत्वविशिष्टद्रव्यत्वाश्रयशुद्धद्रव्यत्वा-नधिकरणगुणादिनिरूपितवृत्तित्वसामान्याभावस्यद्रव्यत्वत्वविशिष्टे-सत्वादव्याप्तिवारणायप्रतियोगितावच्छेदकावच्छिन्नासंबन्धीति । तदवच्छिन्नाभाववानित्यस्यप्रयोजनं ग्रन्थे व्यक्तीभविष्यति । वृत्तितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशात्तादृशप्रतियोगि-तावच्छेदकघटत्वावच्छिन्नप्रतियोगिताकाभाववत्पर्वतगगनादिनिरूपित कालिकतादात्म्यसंबन्धावच्छिन्नवृत्तित्वस्यैव घटत्वगगनत्वविशिष्टे सत्वाद्वृत्तित्वाभावाप्रसिद्धावपि न पारिभाषिकावच्छेदकाप्रसिद्धिः ।

तादृशप्रतियोगितावच्छेदकीभूतमहानसीयवह्नित्वावच्छिन्नाभाव-वज्जलादिनिरूपितवृत्तित्वाभावस्य वह्नित्वविशिष्टे सत्वादव्याप्तिवार-णाय वृत्तित्वसामान्याभाव उक्तः ।

तादृशप्रतियोगितावच्छेदकीभूतघटत्वावच्छिन्नाभाववत्पर्वतानिरू-पितवृत्तित्वाभावस्य वह्नित्वविशिष्टे महानसीयवह्नौ सत्वादव्याप्तिवा-रणाय यद्धर्मविशिष्टसामान्येत्यत्र सामान्यपदम् ।

अनुगमस्तु हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकविशिष्टो

थो धर्मस्तदन्यसाध्यतावच्छेदकेत्यादि वै०प्रतियोगिव्यधिकरणस्वावच्छिन्नाभाववन्निरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेनेति।

साध्यतावच्छेदकसंबन्धसामान्ये यादृशधर्मावच्छिन्नप्रतियोगिकत्वयद्यदनुयोगिकत्वसामान्योभयाभावस्तादृशधर्मावच्छिन्नाभाववति साध्यतावच्छेदकसंबन्धेनाऽसंबद्धं यत्तत्संबन्धेन यद्धर्मविशिष्टसामान्यं तत्तत्संबन्धावच्छिन्नतद्धर्मनिष्ठावच्छेदकताकविशेष्यताभिन्ना या साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताक विशेष्यता तदवच्छेदकसाध्यतावच्छेदकेत्यादि।

तादृशधर्मावच्छिन्नाभाववति असंबद्धमित्यस्यापि साध्यतावच्छेदकसंबन्धसामान्ये तादृशधर्मावच्छिन्नप्रतियोगिकत्व यद्यदनुयोगिकत्वसामान्योभयाभावस्तत्र तत्र साध्यतावच्छेदकसंबन्धेनाऽसंबद्धमित्यर्थः। तेन कालो घटवान् महाकालत्वादित्यादौ तादृशप्रतियोगितावच्छेदकगगनत्वावच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्याप्रसिद्धावपिनाव्याप्तिः। अनुगमस्तु अन्यतोऽवसेयः।

अस्मिन् कल्पेपि विशिष्टसत्तान् जातेरित्यादावतिव्याप्तिः, जातिमन्निष्ठाऽभावप्रतियोगितावच्छेदकद्रव्यत्वत्वावच्छिन्नाभाववति विशिष्टसत्तात्वविशिष्टस्य वृत्तेः, गुणे गुणकर्मान्यत्वविशिष्टसत्ता इति प्रतीतेः। यद्धर्मे तादृशप्रतियोगितावच्छेदकावच्छिन्नाभाववन्निष्ठाधिकरणतानिरूपितनिरूपकतानवच्छेदकत्वविवक्षया तत्र नातिव्याप्तिः विशिष्टसत्तावान् गुण इतिप्रतीत्यभावात्। परन्तु एवमपि सत्तावान् भावत्वादित्यादावतिव्याप्तिः, तादृशप्रतियोगितावच्छेदकीभूतसत्तात्वावच्छिन्नाभाववति सामान्यादौ साध्यतावच्छेदकसमवायेन संबन्धित्वाऽप्रसिद्धया तादृशप्रतियोगितावच्छेदकपदेन सत्तात्वस्य धारणाऽसंभवात्, घटत्वादेरेव धर्त्तव्यतया घटत्वादेरेव पारिभाषिकावच्छेदकत्वात्। यद्यपि साध्यतावच्छेदक संबन्धसामान्ये तादृशप्रतियोगितावच्छेदकावच्छिन्नाभाववदनुयोगिकत्व — यद्धर्मावच्छिन्नप्रतियोगिकत्वसामान्योभयाभावः स धर्मः पारिभाषिकावच्छेदक इत्युक्तौ नातिव्याप्तिः, साध्यतावच्छेदकीभूतसमवायसंबन्धे तादृशप्रतियोगितावच्छेदकसत्तात्त्वावच्छिन्नाभाववत् सामान्यानुयोगिकत्व

सत्तात्वावच्छिन्नप्रतियोगिकत्वोभयाभावसत्वेन यद्धर्मपदेन सत्तात्वस्योपादानसंभवात्। तथापि प्रमेयधूमवान् वन्हेरित्यादौ धूमत्वावच्छिन्नाभाववदयोगोलकानुयोगिकत्व, प्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वोभयत्वावच्छिन्नप्रतियोगित्वस्याऽप्रसिद्धया प्रमेयधूमत्वस्य यद्धर्मपदेनोपादातुमशक्यत्वात्, धूमत्वस्यैवोपादेयतया तदवच्छिन्नविशेष्यताभिन्नत्वस्य प्रमेयधूमत्वावच्छिन्नविशेष्यतायां सत्वादतिव्याप्तिरतःकल्पान्तरम्।

तथा च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं स धर्मः पारिभाषिकावच्छेदकः तदन्यसाध्यतावच्छेदकेत्यादि। वन्हिमान् धूमादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदक घटत्वस्य घटत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वाद् घटत्वमेव पारिभाषिकावच्छेदकं तदन्यत्वस्य वह्नित्वे सत्त्वाल्लक्षणसमन्वयः। प्रमेयधूमवान् वन्हेरित्यादौ वन्हिमन्निष्ठाभाव प्रतियोगितावच्छेदकं लाघवाद् धूमत्वं तस्य प्रमेयधूमत्वविशिष्टसंबन्धिनिष्ठाभाव प्रतियोगितानवच्छेदकत्वात्प्रमेयधूमत्वं पारिभाषिकावच्छेदकमेवेति नातिव्याप्तिः।

अत्र यद्धर्म विशिष्टसंबन्धित्वं तादृशसंबन्धिनिष्ठाभावप्रतियोगित्वं च साध्यतावच्छेदकसंबन्धेन बोध्यम्। तेन कालिकेन घटत्वविशिष्टसंबन्धिपर्वतनिष्ठाभावप्रतियोगितावच्छेदकत्वेपि एवं घटत्व विशिष्टसंबन्धिभूतलनिष्ठसमवायावच्छिन्नप्रतियोगिताकाभावप्रतियोगितावच्छेदकत्वेपि न पारिभाषिकाप्रसिद्धिः।

संयोगेन द्रव्यस्याऽव्याप्यवृत्तितया घटत्वविशिष्टसंबन्धिभूतलनिष्ठाभावप्रतियोगितावच्छेदकत्वाद् घटत्वस्येति तद्दोषतादवस्थ्यमतः यद्धर्मविशिष्टसंबन्धिनिष्ठाभावः प्रतियोगिव्यधिकरणो ग्राह्यः। प्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नासंबन्धी यद्धर्मविशिष्टसंबन्धीति तदर्थः। प्रतियोगितावच्छेदकसंबन्धनिवेशाद्धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वस्य वन्हित्वविशिष्टसंबन्धिनिष्ठो यः संबन्धसामान्येन घटाभावो न प्रतियोगिव्यधिकरणः किन्तु तत्पर्वतासमानकालीनकर्माभावस्तत्प्रतियोगितानवच्छेदकत्वेपि न वन्हित्वस्य पारिभाविकावच्छेदकत्वापत्तिः।

प्रतियोगितावच्छेदकाश्रयत्वनिवेशे सत्तावान् जातेरित्यादौ सत्तात्वविशिष्टसंबन्धिगुणादिनिष्ठविशिष्टसत्ताभावस्य सत्तात्मकप्रतियोगिसमानाधिकरणतयाऽभावान्तरप्रतियोगितानवच्छेदकत्वस्य विशिष्टसत्तात्वे सत्त्वेन सत्तात्वस्य पारिभाषिकावच्छेदकत्वापत्तिरतः प्रतियोगितावच्छेदकावच्छिन्नासंबन्धीति ।

यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमित्यत्राव - च्छेदकत्वं प्रतियोगितावच्छेदकताघटकसंबन्धेन वाच्यम्, अन्यथा वन्हिमान् धूमादित्यादौ तादृशावच्छेदकीभूतघटत्वस्य घटत्वविशिष्टसंबन्धिभूतलादिनिष्ठो यः विषयितया घटत्वविशिष्टस्य प्रतियोगिव्यधिकरणाभावस्तत्प्रतियोगितावच्छेदकत्वेन पारिभाषिकावच्छेदकाप्रसिद्धिः स्यादिति ।

अथ कालो घटवान् महाकालत्वादित्यादावव्याप्तिः, गगनत्वविशिष्टस्य कालिकसंबन्धेन संबन्ध्यप्रसिध्द्या तस्य पारिभाषिकावच्छेदकत्वाऽसंभवात्, साध्यतावच्छेदकसंबन्धसामान्ये तादृशधर्मावच्छिन्नाभाववदनुयोगिकत्व - यद्धर्मविशिष्टप्रतियोगिकत्वोभयाभावः स धर्मः पारिभाषिकावच्छेदक इत्युक्तौ गगनत्वमेव तादृशो धर्म इत्यव्याप्तिवारणेपि प्रमेयधूमवान् वन्हेरित्यादावतिव्याप्तेरुक्तत्वादिति चेन्न। साध्यतावच्छेदकसंबन्धसामान्ये तादृशप्रतियोगितावच्छेदकावच्छिन्नाभाववदनुयोगिकत्वव्यक्तीनां यद्धर्मविशिष्टप्रतियोगिकत्वव्यक्तीनां तद्व्यक्तित्वेनोभयाभावकूटवत्वं स धर्मः पारिभाषिकावच्छेदक इत्यर्थात्। प्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेपि तादृशानुयोगिकत्व, तादृशप्रतियोगिकत्वनिष्ठतत्तद्व्यक्तित्वेमोभप्रभावकूटमादायैव नातिव्याप्तिः ।

केचित्तु तादात्म्य-साध्यतावच्छेदकान्यतरसंबन्धेन यः स्वविशिष्टसंबन्धी तन्निष्ठो यस्तादृशान्यतरसंबन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वमुक्तलक्षणार्थ इति प्राहुः। अस्य सम्यक्त्वासम्यक्त्वे ग्रन्थे एव स्पष्टम् ।

एवं प्रतियोगिताधर्मिकोभयाभावघटितकल्पे यद्धर्मावच्छिन्नत्वेत्यस्य यथाश्रुतार्थकत्वे प्रमेयवन्हिमान् धूमादित्यादावव्याप्तिः। प्रमेयवन्हित्वावच्छिन्नत्वस्य प्रतियोगितायामप्रसिद्धेः। अतो यद्धर्मावच्छिन्नत्वस्य यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदका-

वच्छेद्यत्वार्थकत्वं बोध्यम्। यद्धर्मः—साध्यतावच्छेदकोधर्मः यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकेत्यस्य तादृशप्रतियोगितावच्छेदकभिन्नमिति नार्थः। तादृशप्रतियोगितावच्छेदकस्यापि द्वित्वादिना तादृशप्रतियोगितावच्छेदकभिन्नत्वादसंभवापत्तेः। अतो यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकनिष्ठतद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवानिति तदर्थः। तेन तादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदविवक्षयाऽसंभवारणेऽपि प्रमेयवन्हित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकनिष्ठप्रतियोगितायाः लाघवेन वन्हिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेनैवाच्छेदात्तादृशप्रतियोगित्वाप्रसिद्ध्या प्रमेयवन्हिमान्धूमादित्यादावव्याप्तिः स्यात्। अवच्छेदकत्वगर्भनिरुक्तौ च यद्धर्मपदेन साध्यतावच्छेदकस्य धर्तुमशक्यत्वात्प्रमेयधूमवान् वन्हेरित्यादावतिव्याप्तिश्च स्यात्।

संयोगी सत्वादित्यादौ सत्ताधिकरणगुणनिष्ठाभावप्रतियोगितायाः संयोगत्वावच्छेद्यत्वेपि संयोगत्वस्य संयोगत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वाभावादनवच्छेदको यो धर्मस्तदवच्छेद्यत्वाभावप्रयुक्तोभयाभावसत्वादतिव्याप्तिवारणाय यद्धर्मविशिष्टसंबन्धिनिष्ठाभावः प्रतियोगिव्यधिकरणत्वेन विशेषणीयः। तथा च स्वावच्छिन्नानधिकरणयद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वं संयोगत्वेऽक्षतमिति तदवच्छेद्यत्वस्यैव हेतुमन्निष्ठाभावीयसंयोगनिष्ठप्रतियोगितायां सत्वान्नातिव्याप्तिः। घटवान् महाकालत्वादित्यादौ च स्वावच्छिन्नानधिकरणसाध्यवत्खण्डकालनिष्ठतत्कालासमानकालीनतद्व्यक्त्यभावीयप्रतियोगितावच्छेदकत्वं तद्व्यक्तित्वे सुलभम्।

प्रथमनिरुक्तौ प्रतियोगिवैयधिकरण्याप्रवेशे धूमवान् वन्हेरित्यादावतिव्याप्तिः वन्हिमदयःपिण्डनिष्ठाभावप्रतियोगितावच्छेदकयदयोगोलकावृत्तिद्रव्यत्वं तदवच्छिन्नाभाववान् महानसादिरपि "न हि उत्पत्तिकालावच्छेदेन महानसादौ किंचिदपि संयोगेन वर्त्तते" तत्र धूमत्वविशिष्टस्य संबद्धत्वात्।

तथा च धूमवान् वन्हेरित्यत्रातिव्याप्तिवारणायप्रथमनिरुक्तौ प्रतियोगिवैयधिकरण्यनिवेशस्यावश्यकत्वे मूले अव्याप्तिवारणाय तन्निवेशनीयमिति ध्येयम्।

हेतुमन्निष्ठाभावीय स्वरूपसंबन्धावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टसंबन्धिनिष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकावच्छेद्यत्वाभावः तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्युक्तौ नोपादेयं प्रतियोगिवैयधिकरण्यद्वयम्।

धूमवान् वन्हेरित्यादौ वन्हिमन्निष्ठधूमवत्वप्रकारप्रमाविषयत्वाभावीयप्रतियोगितासामान्ये धूमत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकीभूतधूमवत्वप्रकारकप्रमाविषयतात्वावच्छेद्यत्वसत्वान्नातिव्याप्तिः।

अयमत्रसंग्रहः। नाप्यनतिरिक्तवृत्तित्वमित्यादिना। प्रतियोगितायाः स्वरूपसंबन्धरूपावच्छेदकत्वं परित्यज्य प्रतियोगिताया अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वनिवेशः। तच्च प्रतियोगितानतिरिक्तवृत्तिस्वरूपम्, प्रतियोगित्त्वाभाववदवृत्तित्वमिति यावत्। अत्र प्रतियोगित्वाभावः प्रतियोगितानिष्ठतत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकः—प्रतियोगितात्वावच्छिन्नप्रतियोगिताको वेत्यन्यदेतत्। व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वे तु। प्रतियोगितातिरिक्तवृत्तित्वे सति प्रतियोगितासमानाधिकरणं यत्तदन्यत्वमपि तत्। अन्यूनानतिरिक्तवृत्तित्वमपि तत्। अन्यूनत्वं व्यापकत्वम्। अनतिरिक्तवृत्तित्वं व्याप्यत्वम्, तथा च प्रतियोगिताव्यापकत्वे सति प्रतियोगिताव्याप्यत्वं तदित्यर्थः। ततः प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपतया प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वरूपप्रतियोगितानतिरिक्तवृत्तित्त्वस्य निवेशः तच्च प्रतियोगितावच्छेदकाभाववदवृत्तित्वम् प्रतियोगितावच्छेदकावच्छिन्नाभाववति असंबद्धं यद्धर्मविशिष्टसामान्यं तत्त्वमिति यावत्, इदं च पारिभाषिकावच्छेदकत्वम्, प्रतियोगितायाः प्रतियोगिस्वरूपमतेन। प्रतियोगितावच्छेदकं यद्धर्मव्यापकं तत्त्वं च तत्। प्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तत्त्वमिति यावत्। परन्तु एतत्कल्पद्वयेऽनतिरिक्तवृत्तित्वस्य पारिभाषिकत्त्वापत्तिरिष्टव्या। एतेन हेत्वधिकरणेऽसंबद्धंयद्धर्मविशिष्टसामान्यं तदेव पारिभाषिकावच्छेदकमित्यपि निरस्तम्।

कंबुग्रीवादिमान्नास्तीतिप्रसितिबलात्कंबुग्रीवादिमत्त्वरूपगुरुधर्मस्य प्रतियोगितावच्छेदकतया संभवति लघौधर्मइत्यादिनियमस्याऽप्रोजकत-

यास्वरूपसंबन्धरूपावच्छेदकतापत्त एव श्रेयानिति नव्याः। तेषामयमाशयः। यथा घटत्वेऽभावप्रतियोगितावच्छेदकत्वग्राहकमानं घटो नास्तीति प्रतीतौ अवच्छिन्नप्रतियोगिताकत्वसंबन्धेन घटत्वस्याभावांशे मानमेव, तादृशभानाद् घटत्वेऽभावप्रतियोगितावच्छेदकत्वसिद्धिः, तथैव कंबुग्रीवादिमान्नास्तीति प्रतीतावपि अभावांशेऽवच्छिन्नप्रतियोगिताकत्वसंबन्धेन कंबुग्रीवादिमत्वस्यैव भानम् न तु घटत्वस्य तथा च तद्ग्राहकमानसत्वेन कंबुग्रीवादिमत्वेऽपि अभावप्रतियोगितावच्छेदकत्वस्य सिद्धिरिति।

स्वरूपसंबन्धरूपावच्छेदकत्ववादिभिः ज्ञानभेदेन विषयताभेदमवलंब्य वन्ह्यभाववान् ह्रद इति निश्चयीय प्रतिबन्धकतावच्छेदकतावन्ह्यभावाद्येकदेशविषयतायामपि स्वीक्रियते। वन्ह्यभाववान् ह्रद इति ज्ञानीय वन्ह्यभावविषयतायाः निरूपकतासंबन्धेन ज्ञानान्तरेऽसत्वेन वन्ह्यभाव इति निश्चयस्य प्रतिबन्धकत्वापत्तिविरहात्।

क्वचिच्चावच्छेदकत्वं स्वाश्रयसंबन्धित्वात्मकम्। यथा इह पर्वते नितम्बे हुताशन इति बोधे 'नितम्बावच्छिन्नपर्वतनिरूपितवृत्तितावान्वन्हिरित्याकारके' नितम्बस्य वन्हिनिष्ठवृत्तितावच्छेदकत्वम्। स्वं—अवच्छेद्यीभूता वन्हिनिष्ठा वृत्तिता। तदधिकरणस्य तन्निष्ठधर्मावच्छेदकत्वमिति नियममनुसृत्येदम्।

इदानीं तन्तौ न घटः, गृहे नेदानीं गौरित्यादि प्रत्ययबलात् क्रमेण कालदेशयोरप्यवच्छेदकत्वम्। तच्च स्वरूपसंबन्धविशेषः। देशे कालस्येव काले देशस्यावच्छेदकत्वमित्यभियुक्ताः। अत एव भावाभावयोरेकत्र समावेशार्थमवच्छेदकत्वस्वीकारः। क्वचिद्विशेषणेऽप्यवच्छेदकत्वं व्यावर्त्तकत्वरूपम्, क्वचिद्विषयतारूपं चेति, यथा साध्यतावच्छेदकता, सा च गुरुधर्मेपीति ग्रन्थेऽस्मिन्नभावप्रतियोगितावच्छेदकत्वस्यैव विचार इति शम्।

## —दीधितिकारस्य रघुनाथशिरोमणेः संक्षिप्तः परिचयः—

तार्किकशिरोमणिः श्री रघुनाथो बङ्गदेश निवासी आसीत्। बाल्यावस्थायामेव अस्य पितृपादा गङ्गाधरस्याङ्गभूषणतामगमन्। एकस्मिन्नहनि रघुनाथशिरोमणे मातृदेव्या अग्निमानयितुं समीपस्थे

महानसेऽयं प्रेषितः। बालको रघुनाथः सरलस्वभावसम्पन्नः पात्रं विनैवाऽग्निमानेतुकामः सार्वभौमश्रीवासुदेवस्य पाकशालां गतवान्। तत्र गत्वाऽयं बालः 'अग्निं देहि' इति प्रोवाच। पात्रहीनं बालकं विलोक्य सर्वेऽपि तत्रत्या वासुदेवसार्वभौमशिष्या उपहसितवन्तः कथितवन्तश्च अग्नेराधारभूतं किमपि पात्रं नाऽऽनीतवान्? इत्यादि। गृहाण अग्निं कुत्र गृह्यते? साग्निं छात्रहस्तं विलोक्य रघुनाथः सत्वरं बाहुल्येन धूलिं हस्तयोः संस्थाप्य एतस्योपरि अग्निर्दीयतामिति प्रोवाच। एतादृशं रघुनाथशिरोमणेर्बुद्धिकौशलं लोकोत्तरं निरीक्ष्य सार्वभौमस्तस्य बालकस्य पृष्ठमनुजगाम। गृहं गत्वा बालकस्य मातरं प्रोवाच सार्वभौमः, यत्तेऽयं बालकः प्रतिभासंपन्नः लोकोत्तरज्ञानकलाकुशलो भविष्यतीत्यत्र नास्ति लेशतोऽपि संशयावकाशः। बालकस्य मात्रा सार्वभौमनिरुक्तौ स्वीयेष्टसाधनत्वं विज्ञाय सार्वभौमाय समर्पितोऽयं बालः। वासुदेवसार्वभौमस्तं रघुनाथनामानं बालं सहैव गृहं नीतवान्। सर्वथा निरक्षरम् अपठितञ्च तं बालं प्रारम्भिकं क—ख इत्यादिना शिक्षयितुमारेभे सार्वभौमः। एकदा रघुनाथेन बालकेन स्वीयो गुरुः सार्वभौमः पृष्टः, यद् भो गुरो? किमत्र कारणमस्ति यत् 'क' इत्याख्य एव वर्णः 'क' इति नाम्नाव्यपदिश्यते 'ख' वर्णः, 'ग' वर्णो वा कथं न 'क' इति नामधेयेन व्यवह्रियते। एवं 'क' एववर्णः सर्वतः प्राक् कथमुक्तः? खकारादयो वर्णाः कथं पूर्वं नोक्ता? इत्यपि समाधीयताम्? गुरुणा उक्तं साधु पृष्टं त्वया वत्स! 'क' एववर्णः सर्वतः प्राक् एतदर्थमेवोच्यते यत् सृष्टेरादौ सर्वप्रथमं ब्रह्मण एव समुत्पन्निजातो इति नास्ति अविदितं केषामपि विदुषाम्। अतः 'क' एव ब्रह्मा वर्तते तथा च ब्रह्मास्थानीयः ब्रह्मार्थकः 'क' एव 'क' इति नामधेयेन व्यपदिश्यते।

खकारादयो वर्णा "क" शब्देन एतदर्थं न व्यह्रियन्ते, यत्र येषां शब्दानां शक्तिर्लक्षणा वा वर्तते शक्तिलक्षणात्मकेन संकेतेन स एव अर्थोऽभिधीयते इति। यथा घटशब्देन कंबुग्रवादिमान् एव घटरूपोऽर्थः कथ्यते नतु आतान–वितानभावापन्नः पटरूपोऽर्थ इति।

तद्वदेवहि "क" शब्देन 'क' रूप एव अर्थोऽभिधीयये न तु 'ख' अथवा 'ग' आदयोऽर्थाः कथयन्ते। परन्तु एतादृशं बालकस्य बुद्धिकलाकौशलं निरीक्ष्य सार्वभौमस्य हृदि महानेव हर्ष प्रकर्षः समजीजनत्।

अन्ते च पक्षधरस्य गृहे यदाऽध्ययनार्थं गतस्तदा तत्रत्यैरन्तेवासिभिरुपहासरूपेण कथितम् ।

आखण्डलः सहस्राक्षः विरूपाक्षस्त्रिलोचनः ।
वयं द्विलोचनाः सर्वे को भवानेकलोचनः ॥

कल्पक रघुनाथशिरोमणिना एतस्योत्तररूपेण अविलम्बेन प्रोट्टङ्कितम्—

आखण्डलः सहस्राक्षः विरूपाक्षस्त्रिलोचनः ।
यूयं विलोचनाः सर्वे वयं न्यायैकलोचनाः ॥
इत्यादि ।

## —जगदीशस्य संक्षिप्तःपरिचयः—

जगदीशतर्कालङ्कारो भवानन्दतर्कवागीशस्य प्रधानभूतः शिष्य आसीत । आसीच्चाऽयं बाल्यकालत एव मल्लविद्यायाः परमस्नेहवान् व्यक्तिरिति श्रुतवान् । अयमपि च जगद्विख्यातो विषयः यन्मल्लविद्यायां प्रवीणो मानवः भक्ष्यपेयपदार्थेषु सौन्दर्यमवलोकयति । मल्लविद्याप्रभावेनैव चायं महान् उपद्रवी आसीदित्यपिश्रूयते । एकदाजगदीशतर्कालङ्कारः प्रातःकाले स्वीयसहचरैः सार्कं भ्रमम् खर्जूरवृक्षस्याऽधस्तादागतः । तत्रचाऽधःपतितानि रक्तवर्णानि सुन्दरतमानि मधुराणि खर्जूर फलानि भक्षयतुमारेभे । एतावत्येवकाले उपरि दृष्टिनिपातेन एतेभ्योऽधःपपितेभ्योऽपि खर्जूरफलेभ्य उत्कृष्टतमानि तादृशफलानि चाक्षुषप्रत्यक्षविषयीकृतानि जगदीशेन । तेषु फलेषु चाक्षुषप्रत्यक्षविषयतासंपादनमात्रेणैव चाऽयं जगदीशः खर्जुरवृक्षोपरि आरुढवान् । अनन्तरं खर्जुर फलानि त्रोटनार्थं यदा जगदीशेन हस्तः प्रसारितस्तस्मिन्नेव समये सर्पोपि एनमवलोक्य तं दंशार्थं कुर्दितः तदा जगदीशेन तस्य विस्तृतं मुखं हस्तेन विधार्य सः पूर्ण-शक्त्या तं हस्तवशं कृतवान् । सर्पोऽपि कोपाविष्टः सन् अतीव बलेन प्रयत्नमकार्षि परन्तु किञ्चित्समेय व्यतिते सति स च सर्पः हतबलोऽभूत । तदा अत्यन्तक्रोधव्याकुलेन तेन जगदीशस्य हस्तोपरि स्वकीयशरीरस्य आवरणं निगूढं प्रदत्तम् । जगदीशस्तु अतीव त्रस्तो जातः । अन्ते च बुद्धिमता जगदीशेन सर्पस्य मुखस्य तस्मिन्नेव वृक्षोपरि घर्षणं समारब्धम् । मुखातिरिक्तं

छिन्नभिन्नं तं कालसर्पं निर्जीवं कृत्वा अधोभागे प्रक्षेपितवान्। अनन्तरं स्वयं सः वृक्षादधो भागे अवतीर्य सुखमवाप। एनं दृश्यं भवानन्दसिद्धान्तवागीशेन सम्यगवलोकितं। ततः सः जगदीशस्य पार्श्वे पार्श्वे एव जगदीशगृहमागतः। तैः अवलोकिता यदस्य माता सस्यस्य पिष्ठनकार्येरता तदपि न स्वकीयस्य किन्तु पार्श्ववर्तिनां लोकानाम् अनेनैव व्याजेन पारिवास्यनिर्वाहमकरोत्। तदा भवानन्दतर्कवागीशेन कथितं हे मात! मह्यमेनं बालकं प्रदेहि। अहमेनं सम्यग्रूपेण अध्यापयित्वा पुनः तुभ्यं प्रदास्यामि। अयमतीव तार्किको भूत्वा ख्यातिं प्राप्स्यति। तस्मिन्नेव समये तया मात्राऽयं बालकः तेभ्य भवानन्दतर्कवागीशेभ्य प्रदत्तः। जगदीशस्तु अध्ययनं कृत्वा विद्वान् जातः नास्तीदं प्रच्छन्नं नैय्यायिकमण्डलस्याग्रे। अद्यापि व्याप्तिवादे जगदीशस्यैव पाण्डित्यं प्रौढं मन्यन्ते विद्वांसः। यद् व्याप्तिवादे जगदीशस्य समानकक्षकं पाण्डित्यं न मथुरानाथस्य गदाधरस्य वा।

## जगदीशस्य ग्रन्थाः

सिद्धान्तलक्षणम्, व्याप्तिपञ्चकम्, जागदीशीपक्षता, व्यधिकरम्, सिंहव्याघ्रलक्षणम्, सामान्यनिरुक्तिः,

पक्षधरमिश्रकृत आलोकटीकाया उपरि एतेषां टीकामहत्वपूर्णा विद्यते।

**स्वतन्त्रग्रन्था :**—शब्दशक्तिप्रकाशिका; तर्कामृतञ्च। अस्य जन्मकालः १७ शताब्देः प्रारम्भकालः विद्वद्भिर्मन्यते।

इति—

निवेदकः—

श्री काशीस्थ श्रीसन्यासी संस्कृत महाविद्यालयस्य

प्रधानाचार्यः पं० श्रीज्वाला प्रसाद गौडः

## [ कृतज्ञता-प्रकाशः ]

ग्रन्थस्यास्य मुद्रणादौ यैः श्री गुरुवर्य श्री संन्यासि-संस्कृतमहाविद्यालयीय प्रधानाचार्य श्री ज्वालाप्रसादगौडमहाभागैः साहाय्यं कृतमेवं ग्रन्थस्यास्य भूमिकाऽपि तैरेव कृता। अतः तेभ्यः प्रणतिप्रसुनाञ्जलिं समर्पयामि।

ब्रह्मचारी-श्रीपंढरीनाथमहाभागैः, एवं भुवनेश्वर-यति-महाभागैश्च अतीव सहायता प्रदत्ता, अतः ताभ्यां धन्यवादं प्रददामि।

तथाच गीताधर्म प्रेस सञ्चालकैः श्री स्वामी अभयानन्द-स्वामी उमानन्दादि महाभागैश्च पुस्तकनिर्माणकार्यं स्वमुद्रणालये सम्यग्रुपेण मुद्रितमतः तेभ्यः धन्यवादं प्रददामि।

एवं कृतेपि परिश्रमे पुरुषमात्रसाधारणा भ्रमप्रमादादिदोषा अप्यवश्यं भवेयुरेव। तथापि येऽत्र गुणलवस्ते गुरुणां, ये च दोषास्ते मदीया इति गुणैकपक्षपातिनो विपश्चितः क्षाम्यन्तु ममापराधं, निवेदयन्तु च मह्यमत्रत्यान् दोषविशेषान येनाऽहमुद्यतः स्यां द्वितीयावृत्तौ तन्निराकरणायेति भूयोभूयः प्रार्थये पण्डितप्रवरान्।

विदुषामनुविधेयः—

**दत्तात्रेय शास्त्री**

अथ श्रीः

# अवच्छेदकत्व निरुक्तिः

## दीधितिः

ननु अवच्छेदकत्वमिह न स्वरूपसम्बन्धविशेषः। संभवति च लघौ धर्मे गुरौ तदभावात् प्रमेयधूमत्व-कम्बुग्रीवादिमत्त्व-घ्राणग्राह्यगुणत्वादेरतथात्वेन तेन रूपेण साध्यतायां व्यभिचारिणि अतिप्रसंगात्।

---

## जागदीशी

**नन्विति। इह।** अनवच्छेदकत्वमित्यत्र। अवच्छेदकत्वम्। अवच्छेदकत्वपदार्थः।

---

## लक्ष्मीः

यत्कारुण्यकणस्पर्शान्मूकोवाचस्पतीयति।
ब्रह्मोपेन्द्रशिवोपास्यां नत्वा वाचामधीश्वरीम्॥
टीकाऽवच्छेदकत्वस्य निरुक्तेः क्रियते मया।
लक्ष्मीर्हि धीमतामर्थे गुरुपादप्रसादतः॥

अवच्छेदकत्वमिह न स्वरूपसम्बन्धविशेष इत्यादिग्रन्थेन पक्ष-साध्यहेतुभावोज्ञायते तत्रावच्छेदकत्वत्वावच्छेदेन स्वरूपसंबन्ध-विशेषत्वाभावसाधने बाधः, सामानाधिकरण्येन तथात्वे ऽशंतः सिद्ध-साधनमतोऽवच्छेदकत्वविशेषस्य पक्षत्वं प्रदर्शयितुं दीधितौ **इहेति।** हेतुतावच्छेदकादिघटकावच्छेदकत्वं स्वरूपसम्बन्धविशेष एवेत्याशयेनाह। **अनवच्छेदकत्वमित्यत्रेति।** तथा चैतल्लक्षणघटकानवच्छेदकत्वविवरणाऽ"वच्छेदकत्ववद्भिन्न" घटकावच्छेदकत्वमित्यर्थः। विवरणं च [1]स्व[2]प्रतिपाद्यार्थप्रतिपादकत्वम्। अवच्छेदकत्वं पक्षी-

---

१. स्वं. अनवच्छेदकत्वम्। २. प्रतिपाद्यार्थः-अवच्छेदकत्ववद्भिन्नत्वम्।

## लक्ष्मीः

कृत्य स्वरूपसंबन्धविशेषत्वाभावसाधनतात्पर्ये स्वरूपसंबन्धरूपाऽनतिरिक्तवृत्तित्वरूपावच्छेदकतासाधारणावच्छेदकतात्वस्यैकस्याभावेन तत्तदवच्छेदकतात्वेन पक्षत्वस्यावश्यकतया बाधसिद्धसाधनप्रसंगवारणायाऽवच्छेदकत्वपदार्थत्वेन पक्षताप्रदर्शयितुमवच्छेदकत्वस्याऽवच्छेदकत्वपदार्थपरतया व्याचष्टे। **अवच्छेदकत्वमवच्छेदकत्वपदार्थ** इति।

एवं चैतल्लक्षक्षणघटकानवच्छेदकत्वपदविवरणघटकीभूतं यदवच्छेदकत्वं तत्प्रतिपाद्यं "अवच्छेदकत्वपदार्थो वा" न स्वरूपसंबन्धविशेषः अतिप्रसङ्गादित्यनुमानम्। अत्र तद्धघटकस्वरूपसंबन्धविशेषत्वं क्लृप्तपदार्थः सन् किञ्चिद्धर्मोपरागेण संसर्गतावत्त्वम्। यथा प्रतियोगित्वादौ प्रतियोगित्वस्य प्रतियोगिस्वरूपतया क्लृप्तपदार्थत्वात्प्रतियोगितात्वेन संसर्गत्वाच्च, तथाऽत्रापि बोध्यम्।

ननु तथापि एतल्लक्षणघटकावच्छेदकत्वपदार्थत्वेन पक्षत्वे व्यभिचारिवृत्तित्वरूपाऽतिप्रसङ्गस्य स्वरूपसंबन्धविशेषत्वाभावसाधकत्वं न संभवति। साध्यहेत्वोर्वैयधिकरण्यादितिचेन्न। प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावीयप्रतियोगितानिरूपितस्वरूपसंबन्धरूपावच्छेदकतायां एतल्लक्षणघटकत्वाभावस्यैव साध्यत्वात्, अतिप्रसङ्गस्य हेतुता च स्वाश्रयैतल्लक्षणघटकवृत्तित्वविशेषणतापन्नाधिकरणविशेषणतापन्नसाध्य - विशेषणतापन्नसाध्यतावच्छेदकविशेषणतापन्नाभावप्रतियोगित्वसंबन्धेन संपादकतासंबन्धेन वाऽतिप्रसङ्गस्य हेतुत्वम्।

अत्रातिप्रसङ्गे प्रमेयधूमत्वकम्बुवादिमत्वघ्राणग्राह्यगुणत्वादेरतथात्वेनेति हेतुः। अतथात्वेनेत्यस्य हेतुसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वेनेत्यर्थः। तत्र हेतुः **गुरौ तदभावादिति**। प्रतियोगितावच्छेदकत्वाभावादित्यर्थः। विशेषाभावे सामान्याभावस्य हेतुत्वादितिभावः। तत्र हेतुः **संभवति लाघौ धर्मे** इति। लघौधर्मेऽवच्छेदकत्वे संभवतीत्यर्थः तत्रावच्छेदकत्वेसंभवत्वं च लघुधर्मवृत्तिभेदप्रतियोगितावच्छेदकतावत्वम्। अवच्छेदकता च स्वनिष्ठापादकताकापत्तीयविशेष्यतासंबन्धावच्छिन्ना। यथा घटत्वं यदि कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकं स्यात् तदा नकापिआपत्तिः, यथाच घटत्वे कंबुग्रीवा-

## लक्ष्मीः

दिमदभावप्रतियोगितावच्छेदकत्वनिष्ठापादकताकापत्तिविशेष्यत्वविरहेण कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकतावान्नेतिभेदस्य सत्त्वेन तादृशभेदप्रतियोगितावच्छेदकत्वस्य कम्बुग्रीवादिमदभावप्रतियोगिता निरूपितघटत्वनिष्ठावच्छेदकतायां सत्वात्तत्संगतिः ।

लघुत्वगुरुत्वादिकमिदंमेतदपेक्षया लघु, इदमेतदपेक्षया गुरु इति व्यवहारसाक्षिकः सावधिको धर्मविशेष इत्यन्यत्र विस्तरः ।

ननु यथा घटोनास्तीतिप्रतीतौ अभावांशे अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन घटत्वस्य भानात्तुल्यवित्तिवेद्यतया घटत्वेपि अभावप्रतियोगितावच्छेदकत्वभानम्, तथैव कम्बुग्रीवादिमान्नास्तीतिप्रतीतौ अपि अभावांशेऽवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन कम्बुग्रीवादिमत्वस्यैव भानम्, नतु घटत्वस्य,तथा चाऽवच्छेदकग्राहकमानसत्वेन कम्बुग्रीवादिमत्वेऽभावप्रतियोगितावच्छेदकत्वस्य कथं न सिद्धिरिति चेन्न । स्वनिष्ठापादकताकापत्तीयविशेष्यतासंबन्धावच्छिन्नप्रतियोगिताको यः स्वाभावस्तद्वद्वृत्तिर्यः किञ्चिदवधिकगुरुत्वाभावस्तद्वत्वसंबन्धेन तत्तदभावप्रतियोगितावच्छेदकतावद्भवतीति व्याप्त्यैव घटत्वे कंबुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वसिद्धिः । पटत्वं यदि कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकं स्यात्तदा पटवद्वृत्यभावप्रतियोगितावच्छेदकं स्यादिति कम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वनिष्ठापादकताकापत्तीयविशेष्यत्वस्य पटत्वे सत्वेन तत्संबन्धावच्छिन्नप्रतियोगिताककम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वाभावस्य कम्बुग्रीवादिमत्वे सत्वेपि किञ्चिदवधिकगुरुत्वाभावविरहेण तादृशावच्छेदकत्वाभाववद्घटत्ववृत्तिकिञ्चिदवधिक गुरुत्वाभावस्य घटत्वे सत्वेन तत्संबन्धेनाभावप्रतियोगितावच्छेदकत्वस्य घटत्वे एव सत्वन्नतु कम्बुग्रीवादिमत्वेऽतो घटत्वे एव तादृशप्रतियोगितावच्छेदकत्वसिद्धिर्न तु कनुग्रीवादिमत्वे इति ध्येयम् ।

भवानन्दसिद्धान्तवागीशेन समनियतत्वे सति लघुत्वं यत्र तत्रैवावच्छेदकत्वं स्वीक्रियते । तेषामयमाशयः । लघुधर्मसमनियतत्वेन गुरोरनवच्छेदकत्वं साधनीयम् । समनैयत्यं चात्र स्वावच्छिन्नसमव्यापकत्वे सति स्वसामानाधिकरण्यम् । सत्यन्तनिवेशेन सत्तात्वसमनियतेविशिष्टसत्ताभावप्रतियोगितावच्छेदकेविशिष्टसत्तात्वे न व्यभि-

विशिष्टसत्तात्वसमनियतस्य सत्तात्वस्य लघुनोपि न विशिष्टसत्ताभाव प्रतियोगितावच्छेदकत्वम्, गुणादावपि सत्ता नास्तीति प्रतीतिप्रसंगात्। पृथिवीसमवेतत्वस्यासमनियतस्यापि समवेतत्वस्य पृथिवीसमवेताभावप्रतियोगिता वच्छेदकत्वमनतिप्रसङ्गात्।

## ( लक्ष्मीः )

चारः। विशेष्यदलनिवेशाच्च घटप्रागभावत्वादौ घटप्रागभावात्यन्ताभावप्रतियोगितावच्छेदके घटत्वसमनियते न व्यभिचारः। वस्तुतः समनियते लघौ इत्यनेन लघुसमनियतसत्ताकत्वमेव विवक्षितम्। तथा च विशिष्टसत्तात्वादेर्विशेषणविशेष्यसंधन्धेषु पर्याप्तत्वात्तत्रसत्तात्वसमनियतसत्ताकत्वाभावेन न व्यभिचारः। तन्मतमन्वयव्यतिरेकव्यभिचारद्वारा निरस्यति। **विशिष्टसत्तात्वेति। गुणादावपि सत्ता नास्तीति प्रतीतिप्रसङ्गादिति।** तथा च सत्तात्त्वंयदि विशिष्ट सत्ताभावप्रतियोगितावच्छेदकं स्यात्तदा गुणवृत्त्यभावप्रतियोगितावच्छेदकं स्यादित्त्यापत्तिर्बोध्या। न च विशिष्टसत्ताभावस्यगुणेसत्त्वेन गुणवृत्त्यभावप्रतियोगितावच्छेदकत्वं सत्तात्वे इष्टमेवेति वाच्यम्। सत्तात्वं यदि विशिष्टसत्ताभाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवद्वृत्यवच्छेदकतावत्स्यात्तदागुणवृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकणर्याप्त्यनुयोगितावच्छेदकरूपवद्वृत्त्यवच्छेदकतावत्स्यादित्यापत्तौ तात्पर्यात्।

न च गुणादौ सत्तानास्तीतिप्रतीतिः स्यात्तदाकिं स्यादिति वाच्यम्। यद्यन्निष्ठाभावप्रतियोगितावच्छेदकं तत्तन्निष्ठाधिकरणतानिरूपकतानवच्छेदकं स्यादिति ध्येयम्।

अथाऽभावस्य प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया समं विरोधात्सत्तात्त्वावच्छिन्नाधिकरणत्वस्य च गुणे सत्त्वात्तत्र च सत्तानास्तीति प्रतीत्यापत्तिः कथं संगच्छते किंतु गुणे विशिष्टसत्तानास्तीतिप्रतीत्यनुपपत्तिरेव संभवतीति चेन्न। स्वप्रतियोगितावच्छेदकावच्छिन्नाधिकरणतया सार्धं स्वस्य विरोधित्वं वाच्यम् अन्यथा घटत्वावच्छिन्नाधिकरणतया सार्धं पटाभावस्य विरोधित्वापत्तेः। एवं च विरोधित्वस्य स्वत्वगर्भत्वे विशेषत एव विश्रामात् गुणे विशिष्टसत्तानास्तीति प्रतीत्यनुपपत्तिवारणाय विशिष्टसत्तानास्तीत्यभावस्य लाघवेन

( लक्ष्मीः )

द्रव्यत्वाधिकरणतयैव विरोधो न तु सत्तात्वावच्छिन्नाधिकरणतया-सार्धं तथा च विशिष्टसत्ताभावप्रतियोगितावच्छेदकप्रतियोगिताकत्वेन-तदभिन्नसत्ताभावस्यापिद्रव्यत्वाधिकरणतयैव विरोधादापत्तेः सुसङ्गत-त्वात्। अत्र विशिष्टसत्तात्वापेक्षया समनियतत्वे सति लघुत्वेऽपि सत्तात्वस्य नावच्छेदकत्वमित्यन्वयव्यभिचारो बोध्यः।

समनियतलघुधर्मस्य प्रतियोगितावच्छेदकत्वनियमेऽन्वयव्यभि-चारमुक्त्वा व्यतिरेकव्यभिचारमाह। **पृथिवीसमवेतत्वेति**। आपत्ति-मुक्त्वाऽनुपपत्तिमाहेति यावत्।

**असमनियतस्यापि समवेतत्वस्येति**। पृथिवीसमवेतत्वस्य पृथिवीसमवेते सत्वात् शुद्धसमवेतत्वस्य गुणत्वकर्मत्वादौ सत्वादित्यर्थः। **पृथिवीसमवेताभावप्रतियोगित्वावच्छेदकत्वमिति**। समनैयत्योपादाने शुद्धसमवेतत्वस्य समनैयत्याभावात्पृथिवी-समवेताभावप्रतियोगितावच्छेदकत्वं न स्यादिति भावः। **अनतिप्रसङ्गादिति**। अतिप्रसङ्गाद्यनापादकत्वादिति भावः। अथ शुद्धसमवेताभावस्य गुणादावसत्वात्पृथिवीसमवेताभावस्य च गुणादौ-सत्वात्कथं पृथिवीसमवेताभावप्रतियोगितावच्छेदकत्वं समवेतत्वे स्वीकर्तुं शक्यते, अतिप्रसङ्गाद्यनापादकत्वविरहात्। जले समवेतं नास्तीतिप्रतीतिवत्पृथिवीसमवेतं नास्तीति प्रतीत्यनुपपत्तेश्च, समवेत-त्वावच्छिन्नाधिकरणतायास्तत्र सत्वात्। तथा च समवेतत्वमात्रेऽव-च्छेदकत्वस्यानभ्युपगमात्कुतोव्यतिरेकव्यभिचार इति चेन्न। पृथिवी-निरूपितत्वस्य समवेतांशे उपलक्षणस्य प्रतियोगितावच्छेदकत्वाभावेन पृथिवीसमवेतं नास्तीतिप्रतीतिर्जले न भवतीति नानुपपत्तिः। एवं च पृथिवीनिरूपितत्वोपलक्षितसमवेताभावस्य "समवायिमात्राऽवृत्तेः" प्रतियोगितावच्छेदकत्वस्य समवेतत्वमात्रे स्वीकारे क्षतिविरहेण तत्रैव व्यतिरेकव्यभिचारतात्पर्यम्।

ननु उपलक्षणधर्मस्य प्रतियोगितावच्छेदकत्वाभावे पर्वते महान-सीयत्वोपलक्षितवह्निर्नास्तीतिप्रतीतिर्जायते इदानीं न स्यात्केवलवह्नि-

एवं घटरूपत्वस्याऽसमनियतमपि रूपत्वं व्यधिकरणसंयोगादिसंबधावच्छिन्नघटरूपाद्यभावस्य प्रतियोगितावच्छेदकमतः समनैयत्यमकिञ्चित्करम् ।

## लक्ष्मीः

त्वावच्छिन्नाधिकरणतायास्तत्र सत्वादत उपलक्षणीभूतमहानसीयत्वस्यापि प्रतियोगितावच्छेदकत्वं स्वीकार्यम् तथा च नानुपपत्तिः । एवं च पृथिवीनिरूपितत्वोपलक्षितसमवेतं नास्तीति प्रतीतावपि उपलक्षणस्य पृथिवीनिरूपितत्वस्य प्रतियोगितावच्छेदकतया जले पृथिवीसमवेतं नास्तीति प्रतीत्यापत्तिः । उपलक्षणस्यापि प्रतियोगितावच्छेदकत्वेऽउपलक्षितावगाहिविशिष्टवैशिष्ट्यावगाहिप्रतीत्योर - विशेषापत्तिश्चेतिचेत् । अत्रेदं बोध्यम् । महानसीयत्त्वं यदि स्वरूपेण- "साक्षात्संबन्धेन"वन्हौभासते तदा महानसीयवह्निर्नास्तीतिप्रत्ययः- पर्वते स्वीक्रियते स एव विशिष्टवैशिष्ट्यावगाहीत्युच्यते । यदा महानसीयत्वं सामानाधिकरण्यसंबन्धेन "परंपरया" वह्नित्वे "प्रतियोगितावच्छेदके" भासते तदा महानसीयवन्हित्ववान्नास्तीतिप्रत्ययः पर्वतादौ न स्वीक्रियते, स एवोपलक्षितावगाहीव्युच्यते । प्रकृतेपि पृथिवीनिरूपितत्वं समवेतांशे यदा भासते तदा जले पृथिवीसमवेतं- नास्तीति प्रत्ययःस्वीक्रियते स एव विशिष्टवैशिष्ट्यावगाही । यदा पृथिवीनिरूपितत्वं समवेतत्वांशे भासते तदा जलादौ तादृश प्रत्ययो न जायते स एवोपलक्षितावगाहीत्युच्यते । अभावप्रत्ययोहि विशिष्टवैशिष्ट्यबोधमर्यादां नातिशेते इत्यस्य चाऽभावीयप्रतियोगितानिरूपितसाक्षादवच्छेदकतावद्धर्मविशिष्टवैशिष्ट्यबोधमर्यादां न जहातीत्यर्थ इत्यस्मद्गुरुचरणाः ।

ननु समनैयत्यघटकव्याप्यत्वव्यापकत्वयोःस्वावच्छिन्नाधिकरणत्वसंबन्धेन विवक्षणान्न काप्यनुपपत्तिः । तथा हि । निरूक्तसंबन्धेन विशिष्टसत्तात्वस्य गुणेऽसत्वात्तत्र च तादृशसम्बन्धेन सत्तात्वस्य सत्वादिति न विशिष्टसत्तात्त्वसमनैयत्यं सत्तात्वस्येतो विशिसत्ताभावप्रतियोगितावच्छेदकत्वं न सत्तात्वेऽभ्युपेयते । अभ्युपेयते च पृथिवीसमवेताभावप्रतियोगितावच्छेदकत्वं समवेतत्वेऽत आह **घटरुपत्वस्येति** । तथा च घटरूपत्वसमनैयत्यन्नस्वात्वच्छिन्नाधिकरणत्वसंबन्धेन रूपत्वस्य स्वप्रतियोगितावच्छेदकीभूतसंयोगेन घटरूपत्वा-

यस्यावच्छेदकत्वस्वीकारेऽतिप्रसङ्गाद्यभावः स एवावच्छेदक इत्याशयेनाह। सम्भवतीति। अतिप्रसङ्गाद्यनापादके लघौ धर्मे संभवतीत्यर्थः।

प्रमेयधूमत्वस्य तादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधूमत्वानतिरेकादाह। कम्बुग्रीवेति।

## लक्ष्मीः

वच्छिन्नाधिकरणाप्रसिद्धेः। **प्रतियोगितावच्छेदकमिति।** तथा च व्यधिकरणसंयोगेन घटरूपं नास्तीत्यभावस्य प्रतियोगितावच्छेदकं रूपत्वमेव लाघवात् संयोगेन घटरूपाभावस्य केवलान्वयित्ववत् संयोगेन रूपाभावस्यकेवलान्वयितया उभयोः सर्वत्र सत्वेनाऽतिप्रसङ्गाद्यभावात्। भवन्मते तु रूपत्वं तादृशघटरूपाभावप्रतियोगितावच्छेदकं न स्यात्, रूपत्वस्य घटरूपत्वाऽसमनियतत्वादिति भावः **अकिञ्चिकरमिति।** लघुधर्मनिष्ठावच्छेदकतायां समनैयत्यमप्रयोजकं असमनियतेपि लघुधर्मे प्रतियोगितावच्छेदकत्वस्य सर्वसम्मतत्वादिति भावः।

समनियतलघुधर्मेऽवच्छेदकत्वमभ्युपगन्तृभवानन्दसिद्धान्तवागीशमतं निरस्य स्वमतमाह। **किंतु** इति। **यस्य** । लघुधर्मस्य। **अतिप्रसंगाद्यभावः।** आपत्त्यनुपपत्त्यभावः। **सएव** । तादृशलघुधर्म एव। **अतिप्रसंगाद्यनापादके** । आपत्त्यनुपपत्त्यनापादके। **लघौधर्मे** इति। अत्र धर्मपदं प्रतियोगितासमानाधिकरणलघुधर्मस्यैव प्रतियोगितावच्छेदकत्वलाभार्थम्।तेन द्रव्यत्वत्वस्य न विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वम्। अतिप्रसङ्गाद्यनापादकत्वं च अभावविशिष्टाभावप्रतियोगितानवच्छेदकत्वेन निश्चितत्वम्। प्राथमिकाभावपदेन यद्भावप्रतियोगितावच्छेदकत्वं लघुधर्मे व्यवस्थापनीयं स एव ग्राह्यः। वै० स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वस्ववृत्तित्वोभयसं० स्ववृत्तित्वं च स्वसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वसं०। सत्तात्वेन विशिष्टसत्ताभावप्रतियोगितावच्छेदकत्वनिश्चय इति ध्येयम्।

**तादृशेति।** प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावेत्यर्थः। **धूमत्वानतिरेकादिति।** धूमत्वाभिन्नत्वादित्यर्थः। तथा च प्रमेय-

न च कम्बुग्रीवादिमत्वं कम्बुग्रीवादिव्यक्तिरेव, सा च प्रत्येकहेतुमन्निष्ठाभावप्रतियोगिताच्छेदिकैवेति कुतोऽतिव्याप्तिरिति वाच्यम् ।

## लक्ष्मीः

धूमवान्वन्हेरित्यादौ अतिव्याप्त्यभावादितिभावः । **अयंभावः** । धूमत्वे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वसत्वे प्रमेयत्वधूमत्वगतद्वित्वावच्छेदेनापि तादृशप्रतियोगितावच्छेदकत्वाभावोनाङ्गीक्रियते। एकदेशवृत्तिपदार्थस्य व्यासव्यवृत्तिधर्मावच्छेदेनाभावानङ्गीकारात्। घटपटयोर्न घटत्वमिति प्रतीतेरप्रामाणिकत्वात् । पृथिवीजले न गन्धवतीति प्रतीत्यनुरोधेन तादृशनियमानङ्गीकर्तृमतेऽतिव्याप्तिसंगतिः ।

**दीधितौ । कम्बुग्रीवादिमत्वेति** । तथा च कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादावतिव्याप्तिरित्यर्थः। अत्र कम्बुग्रीवादिमत्वं स्वसमवायिसंमवेतत्वसंबन्धेन। साध्यतावच्छेदकसंबन्धश्चसमवायः। न च यत्र कपालद्वयसंयोगनाशाद् घटनाशः तत्र कपालद्वयसंयोगनाशक्षणावच्छेदेन घटवत्यपि कम्बुग्रीवादिमान्नास्तीतिप्रतीतिर्जायते कम्बुग्रीवादिविशेषणविरहेण तादृशप्रतीतिसंभवात् । एवं चात्रकम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वं न घटत्वस्य संभवदुक्तिकम्, कम्बुग्रीवानाशक्षणे घटस्य विद्यमानतया घटोनास्तीति तत्राऽसंभवाद् घटत्वावच्छिन्नाधिकरणतायास्तदानीमपि सत्वात् कथं प्रतियोगितावच्छेदकत्वं घटत्वस्येति वाच्यम् । कम्बुग्रीवादिमतः कालिकेन यत्र साध्यता तत्रैवातिव्याप्तौ ग्रन्थतात्पर्यात् । तत्र कालिकसम्बन्धावच्छिन्नकम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकत्वं घटत्वे सम्भवत्येव। तथा हि— यत्र कपालद्वयसंयोगनाशादेव घटनाशोजातस्तत्र कम्बुग्रीवादिरूपकपालद्वयनाशक्षणे कालिकसंबन्धेन कम्बुग्रीवादिविशिष्टस्याभावो न वर्तते तत्क्षणेपि कम्बुग्रीवान्तरविशिष्टस्य घटान्तरस्य सत्वात् कालिकसंबन्धावच्छिन्नप्रतियोगिताककम्बुग्रीवादिमदभावस्तु नित्ये एव तत्र कालिकेन-घटोनास्तीत्यपि बुद्धिर्जायतेइत्यतिप्रसङ्गविरहात् ।

**न चेति । कम्बुग्रीवादिव्यक्तिरेवेति** । कम्बुग्रीवा च कपालद्वयसंयोगोबोध्यः । व्यक्तिपदोपादानाद्व्यक्तेर्निरवच्छिन्नावच्छेदकत्वं

परंपरया संस्थानगतकम्बुग्रीवात्वजातिमत्त्वस्यैव साध्यतावच्छेदकत्वात्। तस्य च परम्परयाऽवच्छेदकत्वकल्पनामपेक्ष्य लाघवेन घटत्वस्यैव साक्षात्तथात्वादिति भावः।

## लक्ष्मीः

सूचितम्। **सा चेति**। एवं च कम्बुग्रीवादिमत्वस्य कम्बुग्रीवात्मकतया नानात्वेन घटत्वासामनैयत्येन प्रतियोगितावच्छेदकतया नातिव्याप्तिरितिभावः। **परंपरया**। स्वाश्रयसमवायिसमवेतत्वसंबन्धेन। **संस्थानगतेति**। कपालद्वयसंयोगवृत्तीत्यर्थः। तथा च तत्कम्बुग्रीवादिमत्वस्य-हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेपि तदभावस्य साध्यतावच्छेदके-कम्बुग्रीवात्वजातौ सत्त्वादतिव्याप्तिरिति भावः। **तस्य च**। कम्बुग्रीवात्वस्य **परंपरया**। स्व[१]आश्रय[२]समवायि[३]समवेतत्वसंबन्धेन। **साक्षात्**। समवायेन। **तथात्वादिति**। प्रतियोगितावच्छेदकत्वादित्यर्थः। अत्र-घटत्वकम्बुग्रीवात्वयोर्जातित्वाविशेषेण शरीरकृतगौरवाभावेपि परंपरा-संबन्धप्रयुक्तं गौरवं बोध्यम्। तथा च तादृशप्रतियोगितावच्छेदकताया घटत्वे सत्वेपि तदभावस्यसाध्यतावच्छेदके कम्बुग्रीवात्वे सत्वादति-व्याप्तिरिति भावः।

अत्र कम्बुग्रीवात्वस्य परंपरया साध्यतावच्छेदकत्वे उल्लिख्यमानत्वेपि स्वरूपत एवभानम्, समवायेनैवोल्लिख्यमानजातेःस्वरूपतो न भानम्, समवान्यसंबन्धेनोल्लिख्यमानजातेरपि स्वरूपतोभानमतो न गौरवान्तरमपीत्यन्यत्र विस्तरः।

कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यत्रातिव्याप्तिंनिरस्य स्थलान्तरमनुसरति। **नन्विति**। **पृथिवीत्वतेजस्त्वादिना साङ्कर्यादिति**। पृथिवीत्वं विहाय घटत्वं सौवर्ण घटे—घटत्वं विहाय पृथिवीत्वं पटे उभयोः समावेशः पार्थिव घटे। एवं तेजस्त्वेनापि साङ्कर्य बोध्यम्। **घटत्वं यदि नानेति**। तथा च घटत्वं नाना साङ्कर्यादित्यनुमानं

१ स्वं-कम्बुग्रीवात्वम् २ तदाश्रयः कम्बुग्रीवा ३ तत्समवायिसमवेतत्वम् तत्समवायिकपालसमवेतत्वं घटे।

ननु पृथिवीत्वतेजस्त्वादिना सांकर्याद् घटत्व यदि नाना तदा नैकमपि घटत्वं कम्बुग्रीवादिमत्त्वसमनियतमत आह। **घ्राणग्राह्येति।**

## लक्ष्मीः

तच्चानुपपन्नं, घटत्वस्य नानात्वे साङ्कर्यस्याऽसंभवात्। घटत्वस्यैकत्वे साङ्कर्यसंभवेपि नानात्वाऽसंभवादितिचेत्—साङ्कर्यादित्यस्य साङ्कर्यापत्तेरित्यर्थात्। घटत्वमित्यस्य घटपदार्थतावच्छेदकमित्यर्थात्। तथा च घटपदार्थतावच्छेदकं नाना साङ्कर्यापत्तेरित्यनुमानम्। आपत्ते र्हेतुता च विशेष्यता संबन्धेन। घटपदार्थतावच्छेदकत्वं नानावृत्ति साङ्कर्यापत्तिविशेष्यवृत्तित्वादिति यावत्। आपत्तिश्च घटपदार्थतावच्छेदकं यदि नाना न स्यात्तदा पृथिवीत्वादि संकीर्णं स्यादित्याकारिका आपाद्याभावेन हेतुनाऽऽपादकाभावसिद्धिः। आपाद्याभावश्च साङ्कर्याभावः। आपादकाभावश्च नानात्वाभावाभावो—नानात्वमिति यावत् तथा च घट पदार्थतावच्छेदकं पक्षीकृत्य साङ्कर्येण हेतुना नानात्वसिद्धिः नानात्वञ्च धर्म विशिष्टत्वम्। वै० स्वावच्छिन्नबोधक पदवत्तासं०। पदवत्ता च स्वशक्यतावच्छेदकत्व, स्वशक्यतावच्छेदकवृत्तिभेदप्रतियोगित्वोभयसं०।

साङ्कर्यं च जातिविशिष्टत्वम्, वै० स्वसामानाधिकरण्य-स्वाभाववद्वृत्तित्व-स्वसामानाधिकरणभेदप्रतियोगितावच्छेदकत्वैतत्त्रितयसं०। **नैकमपि घटत्वंकम्बुग्रीवादिमत्त्वसमनियतमिति।** तथा च कम्बुग्रीवादिमान्नास्तीत्यभावप्रतियोगितावच्छेदकत्वं यदि तैजसघटत्वे-स्वीक्रियते तदा पार्थिवघटत्वावच्छिन्नाधिकरणे कम्बुग्रीवादिमान्नास्तीतिप्रतीतिः प्रमा स्यात्, एवं पार्थिवघटत्वस्य तथात्वे तैजसघटाधिकरणे तथाप्रतीतिः स्यादितिभावः। अथवा नैकमपि घटत्वंकम्बुग्रीवादिमत्वसमनियतमित्यस्य कम्बुग्रीवादिमदभावप्रतियोगितासमनियतं नैकमपि घटत्वमित्यर्थोबोध्यः। तथा च हेतुसमानाधिकरणकम्बुग्रीवादिमदभावप्रतियोगितावच्छेदकतायाः कम्बुग्रीवात्वे एव सत्वात्तदभावस्य साध्यतावच्छेदकेकम्बुग्रीवात्वे विरहान्नातिव्याप्तिरिति भावः। **दीधितौ। घ्राणग्राह्यगुणत्वादेरिति।** तथा च घ्राणग्राह्यगुणवान्

घ्राणग्राह्यगुणत्वापेक्षया लघोर्ग्राह्यगन्धत्वस्यैव प्रतियोगितावच्छेदकत्वं बोध्यम् । अन्यथा परमाणौ गन्धत्वेन सह घ्राणग्राह्यगुणत्वस्य समनियतत्वाभावाद् गन्धत्वस्य प्रतियोगितावच्छेदकत्वाभावादितिभावः ।

अत्र घ्राणग्राह्यगुणत्वम्, घ्राणग्राह्यत्वे सति गुणत्वाव्यापकजातिमत्त्वम्, तेन-गन्धत्वस्यलघोः समनैयत्ये तात्पर्यमिति कश्चित् ।

**अतथात्वेन** । प्रतियोगितानवच्छेदकत्वेन । **तेनरूपेण** । प्रमेयधूमत्वादिरूपेण । व्यभिचारिणि प्रमेयत्वादौ । "सपक्षवृत्तिप्रमेयत्वादौ" तेन विरुद्धे साध्यसामानाधिकरण्याभावादतिव्याप्त्यभावेपि न क्षतिः ।

## लक्ष्मीः

द्रव्यत्वादित्यादौ हेतुसमानाधिकरणघ्राणग्राह्यगुणाभावप्रतियोगितानिरूपितस्वरूपसंबन्धरूपा या ग्राह्यगन्धत्वनिष्ठाऽवच्छेदकता तद्भिन्नत्वस्यघ्राणग्राह्यगुणत्वे सत्वादतिव्याप्तिरितिभावः । **ग्राह्यगन्धत्वस्यैवेति** । न तु गन्धत्वस्येत्यर्थः । ग्राह्यगन्धत्वं च लौकिकप्रत्यक्षविषयताविशिष्टगन्धत्वम् । **अन्यथा** । गन्धत्वमात्रस्यप्रतियोगितावच्छेदकत्वे । परमाणौ गन्धोनास्तीत्यप्रत्ययवत् घ्राणग्राह्यगुणोनास्तीतिप्रत्ययाभावः स्यात्, गन्धत्वावच्छिन्नाधिकरणतासत्वात् । **परमाणौ** । परमाण्वच्छेदेन । गन्धे इति शेषः । घ्राणग्राह्यगुणत्वं च घ्राणेन्द्रियजन्यलौकिकप्रत्यक्षविषयताविशिष्टगुणत्वम् । अथैवं घ्राणग्राह्यगुणाभावप्रतियोगितावच्छेदकत्वस्य ग्राह्यगन्धत्वे न संभवः, तथा सति पार्थिवपरमाणौ घ्राणेन्द्रियजन्यलौकिकप्रत्यक्षविषयताविशिष्टगुणोनास्तीति प्रतीतिर्न स्यात्, ग्राह्यगन्धत्वावच्छिन्नाधिकरणतायास्तत्र सत्वात् । इति चेन्न । ग्राह्यगन्धत्वपदेन लौकिकप्रत्यक्षविषयताविशिष्टगन्धत्वस्योक्तत्वात् । तथा च परमाणौलौकिकप्रत्यक्षविषयताविशिष्टगन्धोनास्तीति प्रतीतिरपि भवत्येव, परमाणुगन्धस्य लौकिकप्रत्यक्षाऽसम्भवात् ।

**अत्र** । घ्राणगुणवानद्रव्यत्वादित्यत्र । **घ्राणग्राह्यत्वे सतीति** । घ्राणेन्द्रियजन्यप्रत्यक्षविषयताविशिष्टत्वे सतीत्यर्थः । सत्यन्तं गुणत्वाव्यापकजातौ विशेषणम्—ताश्च सुरभित्वाऽसुरभित्व-गन्धत्वजातयः । एवं च तादृशजातेः साध्यतावच्छेदकत्वे तत्र हेतुमन्निष्ठो यः सुरभि-

## नाप्यनतिरिक्तवृत्तित्वम्

**नापीति ।** तादृशप्रतियोगितायास्तद्व्यक्तित्वावच्छिन्नाभाववदवृत्तित्वमपि नेत्यर्थः । तेन तादृशप्रतियोगिताप्रतियोगिकाभाववदवृत्तितया धूमत्वादेरवच्छेदकत्वाभावादतिप्रसंगसंभवात्स्वरूपसंबन्धात्मिकाया इत्यस्य न वैयर्थ्यम् न चाऽग्रिमग्रन्थविरोध इति ध्येयम् ।

### लक्ष्मीः

नास्ति असुरभिर्नास्ति-गन्धो नास्तीत्यभावप्रतियोगितावच्छेदकत्वसत्वात्कथमतिव्याप्तिरिति न शङ्क्यम् । तादृशजातिमत्वं जात्यधिकरणत्वं, तथा च तादृशजात्यधिकरणतात्मकसाध्यतावच्छेदके प्रतियोगितानवच्छेदकत्वसत्वादतिव्याप्तिः संभवत्येवेति । प्रतियोगितावच्छेदकतानवच्छेदकं यत्साध्यतावच्छेदकतावच्छेदकमित्यादि लक्षणे साध्यतावच्छेदकजातित्वे सुरभित्वत्वावच्छिन्नाभावप्रतियोगितावच्छेदकस्य सत्त्वान्नातिव्याप्तिरित्यस्वारसः, कश्चिदित्यनेन सूचितः । नचाऽतिप्रसङ्गपदस्य व्यभिचारिवृत्तित्वार्थकत्वे व्यभिचारिणीत्यस्यानन्वयापत्तिः । व्यभिचारिसमभिव्याहृतातिप्रसङ्गपदस्य वृत्तित्वार्थकत्वात् । विशिष्टवाचकपदानामित्यादिन्यायात् ।

**दीधितौ । नाप्यनतिरिक्तरिक्तवृत्तित्वमिति ।** अवच्छेदकत्वमित्यनुषज्यते । अत्र च प्रतियोगितानतिरिक्तवृत्तित्वमित्यस्य प्रतियोगित्वाभाववदवृत्तित्वमेव यथाश्रुतार्थः । तथा च प्रतियोग्यनधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगित्वाभाववदवृत्तिधर्मः पारिभाषिकावच्छेदकस्तदन्यत्वं साध्यतावच्छेदके निवेश्यमिति भावः । प्रमेयधूमवान्वन्हेरित्यत्र वन्हिसमानाधिकरणप्रमेयधूमाभावप्रतियोगित्वाभाववदत्तिधर्मः प्रमेयधूमत्वं तदन्यत्वस्य साध्यत्तावच्छेदकेऽसत्वान्नातिव्याप्तिः । वन्हिमान् धूमादित्यत्र धूमसमानाधिकरणघटाभावप्रतियोगित्त्वाभाववदवृत्तिघटत्वभिन्नत्वस्य वन्हित्वे सत्वाल्लक्षणसमन्वयः ।

ननु प्रतियोगितायाः प्रतिव्यक्तिभेदेन भिन्नत्वं स्वीकृत्याऽतिव्याप्तिदानं न संगच्छते प्रतियोगिताया ऐक्येपि तादृशप्रतियोगित्वघटोभया-

स्वरूपसंबन्धात्मिकायाः प्रतियोगितायाः प्रतिव्यक्तिभिन्नत्वेन धूमत्वादेरपि तदतिरिक्तवृत्तित्वात् ।

स्वरूपसंबन्धात्मिकाया इति । प्रतिव्यक्तिभिन्नत्वे हेतुः । तत्तदभावप्रतियोग्युभयस्वरूपाया इति तदर्थः । तत्तत्प्रतियोगिमात्रस्वरूपत्वे सामान्या-

## लक्ष्मीः

भाववति धूमे धूमत्वस्य वृत्तितयाऽतिव्याप्तिसंभवादत आह । तादृशेति । हेतुसमानाधिकरणाभावेत्यर्थः । तेन तत्तद्व्यक्तित्वेन प्रतियोगिताया निवेशेन । एवं च नोभयाभावमादायाऽतिव्याप्तिसंभव ऐक्यपक्षे । ननु प्रतियोगिताया भिन्नत्वमतेपि प्रतियोगितात्वावच्छिन्नाभावनिवेशेनैव नातिव्याप्तिरत आह । नवेति । "न च तथाविधयत्किञ्चिदेकाभावप्रतिगितासामान्यशून्यावृत्तित्व मित्यत्र" सामान्यपदस्यापि तदर्थकतया पौनरुक्त्यमिति भावः । तथा च प्रतियोगिव्यधिकरण हेतुसमानाधिकरणाभावप्रतियोगितात्वसमानाधिकरणोभायावृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववदवृत्तित्वमेव परिभाषिकावच्छेदकत्वं तदन्यत्वं साध्यतावच्छेदके वाच्यमिति भावः ।

स्वरूपसंबन्धात्मिकायाः । प्रतियोगितदभावोभयस्वरूपायाः । अतिरिक्तपदार्थरूपप्रतियोगितायाःसिद्धान्तविरुद्धत्वादिभावः। अयमाशयः । धूमोनास्तीति विशिष्टवैशिष्ट्यावगाहिनी बुद्धिः धूमत्वविशिष्टस्याभावेऽवश्यं सबन्धमवगाहते । अन्यथा विशिष्टवैशिष्ट्यबुद्धित्वानुपपत्तेः । स च न संयोगसमवायादिः, अभावे तदभावात् । अधिकरणस्वरूपत्वाभ्युपगमपक्षेपि अधिकरणस्यसंयोगादिसंभवेपि प्रतियोगिनातदसंभवात् । पदार्थान्तरस्य प्रमाणपथाऽनरोहितत्वादिति स्वरूपमेवोभयोः संवन्धः । स एव प्रतियोगितात्वेन व्यवह्रियते । संसर्गता च न धूमत्वेन, नाप्यभावत्वेन, उभयाननुगमात् किन्तु प्रतियोगितात्वेनेति ।

प्रतिव्यक्तिभिन्नत्वेहेतुरिति । यतः प्रतियोगितास्वरूपसंबन्धात्मिका अतः प्रतिव्यक्तिभिन्नाइति तदर्थः । स्वरूपसंबन्धात्मिकाइत्यस्य प्रतियोगितदभावोभयस्वरूपाइत्यर्थोबोध्यः । यतः प्रतिव्यक्तिभिन्नाऽतो-

भावविशेषाभावप्रतियोगितयोरविशेषापत्तिरिति ध्येयम् । धूमत्वादेरपीति । तथा च धूमवान्वन्हेरित्यादौ व्याप्तिलक्षणातिव्याप्तिरितिभावः ।

## लक्ष्मीः

धूमत्वादौ तदतिरिक्तवृत्तित्वम् "धूमाभावीयतत्प्रतियोगित्वाभावाधिकरणनिरूपितवृत्तित्वम्"। तथा च धूमत्वादेरनवच्छेदकत्वाद् व्यभिचारिणि धूमवान् वन्हेरित्यादौ अतिप्रसङ्गादिति शेषः ।

ननु स्वरूपसंबन्धात्मकत्वेपि प्रतियोगितावच्छेदकस्वरूपत्वमस्तु इति न स्वरूपसंबन्धात्मकत्वं प्रतिव्यक्तिभेदे हेतुरित्याशङ्कां परिजिहीषुः प्रतियोगितदभावयोः संसर्गतया भासमानस्य स्वरूपत्वकल्पने प्रतियोगितदभावस्वरूपत्वमेव कल्पयितुमुचितम् न तु प्रतियोगितावच्छेदकस्वरूपत्वमित्याशयेन तद्ग्रन्थं व्याचष्टे । तत्तदभावप्रतियोग्युभयस्वरूपाया इति तदर्थ इति । **सामान्याभावीया इत्यादिः** । प्रतियोगिस्वरूपत्वेपि प्रतिव्यक्तिभिन्नतया इत्यस्य यद्यपि संगतिः संभवतीत्यतोऽभावस्वरूपत्वे प्रमाणमुपन्यस्यति । **तत्तत्प्रतियोगिमात्रस्वरूपत्वे** इति । **अविशेषापत्तेरिति** । अभेदप्रसङ्गादित्यर्थः । वन्ह्यभावीयमहानसीयवह्निनिष्ठप्रतियोगित्वं महानसीयवन्ह्यभावीयप्रतियोगित्वाभिन्नमित्यवच्छेदकभेदेपि अभेदावगाहि प्रत्ययापत्तेरिति भावः । यद्यपि प्रतियोगिस्वरूपत्वेपि सामान्याऽभावीयप्रतियोगितानिखिलप्रतियोगिस्वरूपा विशेषाभावीयप्रतियोगिता न तथेत्ययं विशेषः संभवति । तथापि नचैकैकापिप्रतियोगितानिखिलप्रतियोगिस्वरूपा सर्वप्रतियोगिव्यक्तीनामभेदप्रसंगात् तत्तत्प्रतियोगितैव तत्तत्प्रतियोगिस्वरूपाऽतः का विशेषाभावप्रतियोगितायाः भेदमासादयेत् न चोभयोरविशेषे इष्टापत्तिरितिवाच्यम् । अभावस्य तद्व्यक्तित्वादिनाहेतुत्वस्य सिद्धान्तविरुद्धतया वन्ह्यभावस्य वन्हित्वावच्छिन्नप्रतियोगिताकत्वेनैव हेतुत्वादेर्वक्तव्यतया तत्तद्वन्ह्यभावानां तत्त्वापत्तेः । अथ तर्हि निखिलवन्हिवृत्तिप्रतियोगितात्वावच्छेदेन वन्हित्वावच्छिन्नत्वं न तत्तद्वन्हित्वावच्छिन्नत्वमित्यभ्युपगमेपि सामञ्जस्यमिति चेन्न । यावद्वन्ह्यभावप्रतियोगित्ववन्हिसामान्याभावप्रतियोगित्वयोरभेदापत्तेः । विशेषाभावप्रतियोगित्वयोरित्यादेरुपलक्षणत्वात् ।

समनियताभावयोरैक्यानुपगमाच्च घटादिसामान्याभावस्यैव घटीयादिसंयोगेन प्रमेयसामान्याभावतया पुनर्नाप्रसिद्धिः ।

## तरणी:

अथ सामान्याभावीयप्रतियोगितात्वसामानाधिकरण्येन धूमविशेषाभावीयप्रतियोगि"ता"कतादात्म्यसत्वादुक्तापत्तिस्तदवस्थैवेति चेन्न। असति बाधके उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकावच्छेदेन विधेयान्वय इति नियमस्तथा च धूमसामान्याभावप्रतियोगितात्वावच्छेदेन तत्तद्धूमाभावप्रतियोगितात्वावच्छिन्नप्रतियोगि "ता" कतादात्म्यविरहात्। न च सामान्याभावप्रतियोगित्वस्याऽभावेपि सत्वेन तदवच्छेदेन विशेषाभावप्रतियोगित्वस्याऽभेदापादानाऽसंभवेपि विशेषाभावप्रतियोगितात्वावच्छेदेन सामान्याभावीय प्रतियोगित्वाऽभेदसंभवेन विशेषाभावप्रतियोगित्वं सामान्याभावीयप्रतियोगित्वाभिन्नमित्यापत्तिस्तदवस्थैवेति वाच्यम् व्यासज्यवृत्तिधर्मस्य समनियतव्यासज्यवृत्तिधर्मावच्छेदेनैव पर्याप्त्यभ्युपगमेन सामान्याभावप्रतियोगितात्वावच्छिन्नभेदस्यैव विशेषाभावप्रतियोगितात्वावच्छिन्ने सत्वादिति तथा च सामान्याभावप्रतियोगित्वमभावप्रतियोग्युभयरूपम्। विशेषाभावप्रतियोगित्वं च केवलप्रतियोगिस्वरूपमिति फलितम्।

नन्वत्राऽविशेषापत्तिभयेन सामान्याभावप्रतियोगित्वं तदभावस्वरूपमात्रं कल्पनीयम्, विशेषाभावप्रतियोगित्वं च प्रतियोगिमात्रस्वरूपमिति चेन्न। समनियताभावानामैक्यमतेसंख्याऽभावपरिमाणाऽभावयोःसमनैयत्येनैकतया तत्प्रतियोगित्वयोरविशेषापत्तेः। उभयस्वरूपत्वे तु संख्याऽभावसंख्याउभयरूपा, एकासंख्यात्वावच्छिन्ना, परिमाणतद्भावोभयरूपाऽपरा परिमाणत्वावच्छिन्ना इत्यभावाभेदेपि तयोर्भेद इति।

ननु विशेषाभावप्रतियोगित्वं प्रतियोगितदभावोभयस्वरूपम्, सामान्याभावप्रतियोगित्वं प्रतियोगिमात्रस्वरूपमस्तु इतिचेन्न। विशेषाभावप्रतियोगित्वस्योभयरूपत्वे तव्द्यक्तितदभावोभयरूपत्वं कल्पनीयम्। तत्राऽनन्ताभाव स्वरूपत्वकल्पने गौरवात् लाघवेन सामान्याऽभावीयप्रतियोगितैवोभयरूपेतिध्येयम्।

**न च तथाविधयत्किंचिदेकाभावप्रतियोगितासामान्यशून्यावृत्तित्वं तत् ।**

न चेति । वाच्यमितिपेरणाऽन्वयः । **तथाविधेति** । यत्किंचित्पदं व्याप्यवृत्तिसाध्यकस्थलीयलक्षणाभिप्रायेण, तथा च तथाविधो "हेतुसमानाधिकरणो" यो यत्किञ्चिदभावस्तत्प्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वं तत्रार्थः तथाविधाभावीय-

## लक्ष्मीः

ननु विशेषाभावप्रतियोगित्वं तदभावस्वरूपं सामान्यप्रतियोगित्वञ्च प्रतियोगिमात्रस्वरूपमितिचेन्न । तद्रूपाभावप्रतियोगित्वतद्रसाभावप्रतियोगित्वयोरविशेषापत्तेरिति ।

**अत्रेदं बोध्यम्** । प्रतियोगितायास्तदुभयस्वरूपत्वेपि नैकस्यास्तदुभयरूपत्वम्, अभावप्रतियोगिनोरुभयोरभेदप्रसंगात् तदभिन्नाभिन्नाभिन्नाभिन्नस्यतदभिन्नत्वनियमात् । प्रतियोगित्वंचाभावात्मकं भिन्नं प्रतियोग्यात्मकं च भिन्नमिति प्रतियोगित्वव्यवहारेऽभावान्यप्रतियोगिता एव तादात्म्येन नियामिका । तत्र प्रतियोगिताया उभयरूपत्वेपि नाऽभावस्य प्रतियोगित्वापत्तिः ।

ननु सामान्याभावप्रतियोगित्वस्योभरूपत्वे समनियताभावानामैक्यात्संयोगेन द्रव्याभावप्रतियोगित्व—संयोगेनप्रमेयाभावप्रतियोगित्वयोश्चाविशेषापत्तिरितिचेन्न । इष्टत्वात् ।

ननु व्याप्तिलक्षणप्रस्तावे धूमत्वस्य ऽनवच्छेदकत्वप्रदर्शनमर्थान्तरग्रस्तमतआह **तथा चेति** । अनवच्छेदकत्वे चेत्यर्थः । एवं च व्याप्तिलक्षणाऽतिव्याप्तिप्रदर्शनेन नार्थान्तरापत्तिरितिभावः । एवं च व्याप्तिलक्षणातिव्याप्तिरिति लिखनमपि साधुसंगच्छते ।

अव्याप्यवृत्तिसाध्यके यावान्नास्तीत्यभावस्य यावत्वावच्छिन्नाधिकरणाऽप्रसिद्ध्या प्रतियोगिवैयधिकरण्यविशेषणेनैव वारणसंभवादत उक्तं । **व्याप्यवृत्तिसाध्यकस्थलीयलक्षणाभिप्रायेणेति** । तथाविधेत्यस्यार्थः **हेतुसमानाधिकरण** इति । **यत्किञ्चिदभावः** । यावत्त्वाद्यनवच्छिन्नप्रतियोगिताकाभावः । तथा च यत्किञ्चित्वमभावविशेषणम् । एकत्वं प्रतियोगिताविशेषणम् । तदर्थश्च स्वयमेव वक्ष्यति । **तत्प्रति-**

प्रतियोगितासामान्यशून्यत्वमप्रसिद्धं, सर्वस्यैव वस्तुनस्तादृशयावत्त्वावच्छिन्नाभावप्रतियोगितावत्त्वादत उक्तम्। यत्किञ्चिदिति।

## लक्ष्मीः

योगितान्यतमच्छिन्नाभाववदवृत्तित्वमिति। तादृशयत्किंचिदभावप्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वं पारिभाषिकावच्छेदकत्वं तच्छून्यत्वं साध्यतावच्छेदके विशेषणीयमिति भावः। यत्किञ्चित्त्वनिवेशस्य फलमाह तथाविधाभावीयेति। हेतुसमानाधिकरणाभावीयेत्यर्थः। तादृशेति। हेतुसमानाधिकरणो यो यावान्नास्तीत्यभावस्तादृशाभावीयेत्यर्थः।

अथ वन्हिमान धूमादित्यादावव्याप्तिस्तदवस्थैव, समनियताभावयोरैक्यमते संयोगेन घटाभावस्य घटीयसंयोगेन प्रमेयाभावरूपतयाहेतुसमानाधिकरणघटाभावीयप्रमेयनिष्ठप्रतियोगित्वाभावाप्रसिद्धेरत आह। समनियताभावयोरैक्यानुपगमाच्चेति। घटादिसामान्याभावस्यैवेति। संयोगसंबन्धावच्छिन्नप्रतियोगिताकघटाभावस्यैवेत्यर्थः। घटीयसंयोगेन। घटप्रतियोगिकसंयोगेन। पुनर्नाऽप्रसिद्धिरिति। हेतुसमानाधिकरणघटाभावप्रतियोगितायाः प्रमेयमात्रे सत्वेन तच्छून्यत्वस्य नाप्रसिद्धिरित्यर्थः।

ननु हेतुसमानाधिकरणयत्किञ्चिदभावनिरूपितप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमवश्यं निवेशनीयम् अन्यथा समवायसंबन्धावच्छिन्नवन्ह्यभावीयप्रतियोगित्वाभाववति वन्हित्वस्याऽवृत्त्या पारिभाषिकावच्छेदकतया वह्निमान् धूमादित्यत्राव्याप्तिप्रसंगात्। एवमपि महानसीयसंयोगेन वन्ह्यभावमादायाऽव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धस्येतरवारकपर्याप्तिनिवेशस्यावश्यकतया कुतोऽप्रसिद्धिः, समनियताभावयोरैक्येपि घटीयसंयोगेन प्रमेयाभावनिरूपितप्रतियोगिताया अतथात्वम्। न च समवायेन वन्ह्यभावमादायाव्याप्तिवारणाय हेतुसमानाधिकरणाभावे एव साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताकत्वं निवेशनीयम्, इतरवारकपर्याप्तिश्च तत्रत्यप्रतियोगितायां निवेश्येत्यप्रसिद्धिसंभव इति वाच्यम्। तथा सति

एकधर्मावच्छिन्नार्थकं चैकपदमव्याप्यवृत्तिसाध्यकस्थलीयलक्षणाभिप्रायेण। तथाविधा या एकधर्मावच्छिन्ना प्रतियोगिता तत्सामान्यशून्यावृत्तित्वमिति योजनया यत्प्रतियोगिताया अवच्छेदकीभूतधर्मावच्छिन्नानधिकरणत्वं हेतुमतस्तत्प्रतियोगिताया अवच्छेदकीभूतधर्मावच्छिन्नप्रतियोगितासामान्यशून्यत्वं तत्रार्थं इति वस्तुगतिः।

## लक्ष्मीः

महानसीयवन्हिसंयोगेन वन्ह्यभावमादायाव्याप्तेः, तादृशाभावस्य संयोगेन महानसीयवन्ह्यभावानतिरेकेण साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वादितिचेन्न। संयोगेन घटाभावस्य संयोगेन घटघटान्यप्रमेयोभयाभावस्य चैक्यतया घटाभावनिरूपितसंयोगसंबन्धावच्छिन्नघटघटान्यप्रमेयोभयत्वावच्छिन्नप्रतियोगित्वाभावाप्रसिद्ध्याऽव्याप्तेः। घटीयसंयोगेन प्रमेयाभावस्य चोपलक्षणत्वादिति दिक्।

यत्किञ्चित्पदस्यप्रयोजनमुक्त्वा एकपदस्य प्रयोजनमाह। **एकधर्मावच्छिन्नार्थकं चैकपदमिति। अव्याप्यवृत्तिसाध्यकस्थलीयलक्षणाभिप्रायेणेति।** प्रतियोगिवैयधिकरण्यघटितलक्षणाभिप्रायेणेत्यर्थः। **तथाविधेति।** प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयेत्यर्थः। **तत्सामान्येति।** प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावीयैकधर्मावच्छिन्नप्रतियोगितासामान्येत्यर्थः। **योजनया।** अन्वयेन। **तत्र।** अव्याप्यवृत्तिसाध्यकस्थलीयनिरुक्तौ। तथा च यत्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावीययत्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितासामान्यशून्यावृत्तिर्यो धर्मस्तदन्यसाध्यतावच्छेदकावच्छिन्नेत्यादि। अनुगमस्तु प्रतियोगिताविशिष्टप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वम्। प्रतियोगितायां प्रतियोगितावै० स्वतादात्म्य-स्वावच्छेदकावच्छिन्नानधिकरणहेत्वधिकरणवृत्त्यभावीयत्वोभयसं०। **वस्तुगतिरिति।** अन्यथा समनियताभावैक्यमते घटाभावस्य घटीयसंयोगेनप्रमेयाभावस्य चैक्यात् घटाद्यभावस्य प्रतियोगिवैयधिकरण्याभावेन प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावाऽप्रसिद्ध्या अव्याप्तिः स्यादिति भावः।

अथ यत्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत इत्याद्यभिधाने वह्निमान्धूमादित्यादावव्याप्तिः, महानसीयवह्नित्वावच्छिन्न-

एकपदं शृङ्गग्राहिकतया तत्तदभावप्रवेशार्थमिति तु रिक्तं वचः, हेतुसामानाधिकरण्यवैयर्थ्यात् यत्किञ्चित्पदेनैव तल्लाभादिति ध्येयम् ।

( लक्ष्मीः )

प्रतियोगितावच्छेदकीवच्छेदकीभूतधर्मावच्छिन्नानधिकरणत्वस्य हेतुमति पर्वते सत्वात् तत्प्रतियोगितावच्छेदकीभूतवन्हित्वावच्छिन्नप्रतियोगित्वाभाववदवृत्तित्वस्य साध्यतावच्छेदके सत्वादितिचेन्न । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं हेत्वधिकरणं तादृशप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तित्वस्य प्रतियोगितायां निवेशात् । रूपवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसं ।

अथ यत्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमतस्तत्प्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वमेव निवेश्यताम्, किं तत्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितात्वावच्छिन्नाभाववदवृत्तित्वनिवेशेन इति चेन्न । धूमवान् वन्हेरित्यत्रातिव्याप्तिः, प्रतियोगिभेदेन प्रतियोगिताभेदात्तत्प्रतियोगितामध्ये तद्धूमात्मकप्रतियोगितापि भवति "यत्पदेन यस्याःप्रतियोगिताया उपादानं तच्छून्यत्वस्यापरधूमे सुलभत्वेन" तत्प्रतियोगितात्वावच्छिन्नाभाववति अपरधूमे धूमत्वस्य वृत्तित्वादतस्तदुक्तम् । एवं तत्प्रतियोगितानिरूपकाभाववद्वृत्तित्वं नास्तीत्यभावनिवेशे समनियताभावानामैक्यात् घटाभावस्य घटीयसंयोगेन प्रमेयाभावस्य चैक्यतया घटाभावीयप्रतियोगितानिरूपकाभावीय प्रतियोगित्वस्याऽप्रसिद्ध्याऽसंभवापत्तिः । न च समनियताभावानामैक्यानभ्युपगमेन नाप्रसिद्धिरिति वाच्यम् । समनियताभावानामैक्यानभ्युपगमादित्यभिधानं ग्रंथकर्तुर्यत्किञ्चित्पदघटितव्याप्यवृत्तिसाध्यकस्थलीयलक्षणाभिप्रायेण । एतल्लक्षणस्योभयमते निर्दोषत्वादिति ।

कस्यचिन्मतं दूषयितुमुपन्यस्यति । **एकपदमिति । शृङ्गग्राहिकतया ।** गोशृङ्गग्राहिकतया । **रिक्तं** । त्याज्यं । **तन्निवेशे ।** तत्तदभावनिवेशे । **तल्लाभात् ।** तत्तदभावलाभात् । तथाचैकपदं व्यर्थं स्यादिति भावः । **प्रमेयत्वावच्छिन्नाभावेति ।** हेतुसमानाधिकरणेत्यादिः । **प्रतियोगितासामान्यशून्यत्वाप्रसिद्धेरिति ।** तथा च साध्याभावो न लक्षणघट-

यद्यपि प्रमेयवान् वाच्यत्वादित्यादौ समवायेन साध्यतायां व्यभिचारिणि अतिव्याप्तिः, प्रमेयत्वावच्छिन्नाभावप्रतियोगित्वसामामान्यशून्यत्वाऽप्रसिद्धेः, तादृशाभावान्तरस्य निरुक्तप्रतियोगितानवच्छेदकतायाः प्रमेयत्वे सत्वात्। तथापि तादृशयत्किञ्चिदेकाभावप्रतियोगितात्वं यद्धर्मव्यापकतावच्छेदक तत्त्वं विवक्षितम्।

## लक्ष्मीः

कइति भावः। **तादृशाभावान्तरस्य**। प्रतियोगिव्यधिकरणहेतुसमानाधिकरणघटाभावस्य। **निरुक्तप्रतियोगितानवच्छेदकताया इति**। घटाभावप्रतियोगितात्वावच्छिन्नाभाववदवृत्तिधर्मभिन्नत्वरूपाया इत्यर्थः। यद्यपि तत्संबन्धावच्छिन्नाभावप्रतियोगित्वं तेन संबन्धेन वृत्तिमत्येव प्रतियोगिनि स्वीक्रियते इति नियमात्तादृशप्रतियोगिताशून्यत्वमसमवेतप्रमेये प्रसिद्धं तथापि प्रतियोगितायाः प्रतियोगितावच्छेदकरूपत्वं स्वीकृत्यैव प्रतियोगितासामान्यशून्यत्वाऽप्रसिद्धिरभिहितेति ध्येयम्। **तत्त्वम्**। पारिभाषिकावच्छेदकत्वम्। **विवक्षितमिति**। न च तादृशाभावप्रतियोगित्वं यद्धर्मव्यापकमित्येव कुतोनोक्तमिति वाच्यम्। प्रमेयत्वप्रकारेणघटादिनिष्ठप्रतियोगिताया अपि वन्हित्वादिव्यापकत्वप्रसंगात्। न चात्र व्यापकत्वं न यद्धर्मवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्वम्, किन्तु यद्धर्मवन्निष्ठभेदप्रतियोगितानवच्छेदकत्वम्, तथा च घटनिष्ठप्रतियोगितायाः वन्हित्ववन्निष्ठभेदप्रतियोगिताच्छेदकत्वादेव न व्यापकत्वप्रसङ्ग इति वाच्यम्। स्वरूपसंबन्धात्मकप्रतियोगितायाः प्रतियोगिभेदेन भिन्नत्वे सर्वस्या एव घटादिनिष्ठप्रतियोगिताव्यक्तेः घटत्वादिमन्निष्ठभेदप्रतियोगितावच्छेदकत्वेन पारिभाषिकावच्छेदकाप्रसिद्धेः।

सामान्यधर्मावच्छिन्नप्रतियोगिताया ऐक्यमते वन्हिधूमोभयवान् वन्हेरित्यत्रातिव्याप्तिः, वन्हिधूमोभयाभावप्रतियोगितामात्रस्यैव तादृशोभयत्ववन्निष्ठभेदप्रतियोगितावच्छेदकत्वादिति ध्येयम्।

तथा च हेतुसमानाधिकरणतत्तदभावनिरूपितप्रतियोगितात्ववृत्तिर्योऽभावस्तदीयावच्छेदकत्वनिष्ठप्रतियोगितानिरूपितप्रतियोगितानिष्ठावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपितवृत्तित्वनिष्ठावच्छेदकतानिरूपिताधिकरणनिष्ठावच्छेदकतानिरूपितानिष्ठत्वसंबन्धा-

अस्ति च प्रमेयत्वव्यापकत्वं प्रमेयसामान्याभावप्रतियोगितायामित्यदोषः । तत् । अवच्छेदकत्वम् ।

## लक्ष्मीः

वच्छिन्नावच्छेदकतावद्धर्म एव पारिभाषिक इत्यर्थः । अभावश्च यद्धर्मवद्वृत्त्यभावप्रतियोगितावच्छेदकत्वं नास्तीत्याकारकः । तथा च घटे-घटाभावप्रतियोगितानास्तीत्यभावस्याऽसत्वेन घटनिष्ठप्रतियोगितात्वे घटत्ववद्वृत्त्यभावप्रतियोगितावच्छेदकत्वाभावः सुलभ एवेति । अथ घटत्ववद्वृत्ति "घटाभावनिरूपित" प्रतियोगित्वाभावीय प्रतियोगितावच्छेदकत्वस्य प्रतियोगितात्वे सत्वेन घटाभावनिरूपितप्रतियोगितात्वेपि सत्वात् विशिष्टस्य शुद्धानतिरेकात्, घटत्वादिकमपि न पारिभाषिकावच्छेदकमिति पारिभाषिकावच्छेदकाऽप्रसिद्ध्याऽव्याप्तिः । न च घटाभावनिरूपितत्वविशिष्टप्रतियोगितात्वे घटाभावनिरूपितप्रतियोगितावच्छेदकत्वाभावस्य सत्वान्न घटत्वव्यापकत्वाप्रसिद्धिरिति वाच्यम् । एकदेशवृत्तिधर्मस्य विशिष्टानुयोगिकाभावानंगीकारादिति चेन्न । तदभावनिरूपितप्रतियोगिता नास्तीत्यभावीयप्रतियोगितानिरूपिताऽवच्छेदकतात्वाच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपे तद्धर्मवद्वृत्त्यभावप्रतियोगितावच्छेदकतात्वावाच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वं नास्तीत्यभावनिवेशात् । एवं च घटाभावनिरूपितप्रतियोगितात्वगतसमुदायत्वे घटत्ववद्वृत्त्यभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वाभावसत्वेन घटत्वे पारिभाषिकावच्छेदकत्वसंभवात् ।

समवायेन प्रमेयसाध्यकव्यभिचारिणि अतिव्याप्तिं निराकरोति । **अस्ति चेति । प्रमेयत्वव्यापकत्वं ।** साध्यतावच्छेदकीभूतप्रमेयत्वव्यापकत्वं । **इत्यदोष इति ।** तथा च प्रमेयसामान्याभावप्रतियोगितात्वस्य प्रमेयत्वव्यापकतावच्छेदकत्वेन प्रमेयत्वस्य पारिभाषिकावच्छेदकत्वान्नातिव्याप्तिरित्यर्थः । वन्हिमान् धूमादित्यादौ-धूमसमानाधिकरणघटाभावप्रतियोगितात्वं घटत्वस्यैव व्यापकतावच्छेदकमतो घटत्वस्य पारिभाषिकावच्छेदकत्वाल्लक्षणसमन्वयः । प्रमेयधूमवान् वह्नेरित्यादौ तु वन्हिमन्निष्ठ प्रमेयधूमाभावप्रतियोगितात्वस्य प्रमेयधूमत्वव्यापकतावच्छेदकत्वान्नातिव्याप्तिः ।

**अतएवाऽतिरिक्तसामान्याभावस्याभावे धूमत्वादेरप्यनवच्छेदकत्वापातादग्रे तत्साधनमपि साधु संगच्छत इति वाच्यम् ।**

**अतएवेति** । यत्किञ्चिदेकाभावव्यक्तेः प्रवेशादेवेत्यर्थः । यदि सामान्याभावो नास्ति तदा वन्हिमन्निष्ठतत्तद्धूमाभावप्रतियोगितासामान्यशून्ये धूमान्तरे वर्त्तमानतया धूमत्वस्य निरुक्तावच्छेदकत्वं न स्यादिति व्याप्तिलक्षणाऽतिव्याप्तिनिरासार्थमेव सामान्याभावःसाधयिष्यते इति । तथा च धूमसामान्याभावस्यैव हेतुसमानाधिकरणस्य प्रतियोगितासामान्यशून्ये घटादौ अवृत्त्या धूमत्वस्यावच्छेदकत्वमिति भावः ।

## लक्ष्मीः

**दीधितौ** । **अतिरिक्तसमान्याभावस्य** । विशेषाभावकूटातिरिक्तसामान्याभावस्य । **अभावे** । **असत्वे** । तथा च सामान्याभावस्य विशेषाभावकूटाऽनतिरिक्तत्वोपगमे इति यावत् । **धूमत्वादेरप्यनवच्छेदकत्वापातादिति** । "अभावे यत्किञ्चिदेकत्वनिवेशे" विशेषाभावकूटान्तर्गतमेकमभावमुपादाय धूमत्वादौ यत्किञ्चिदेकाभावप्रतियोगितासामान्यशून्यावृत्तित्वरूपावच्छेदकत्वोपपादनाऽसंभवादिति भावः । **अग्रेति** । सामान्याभावग्रन्थे । **तत्साधनम्** । अतिरिक्तसामान्याभावसाधनम् । **सङ्गच्छतेइति** । अभावे यत्किञ्चिदेकत्वाऽप्रवेशे विशेषाभावकूटप्रतियोगितानतिरिक्तवृत्तित्वेनैवाऽतिप्रसङ्गवारणसंभवेऽतिरिक्तसामान्याभावसाधनं व्यर्थमेव स्यादिति भावः । **यदीत्यादिः** । **सामान्याभावो नास्तीति** । विशेषाभावकूटातिरिक्त-इत्यादिः । **तदा** । अतिरिक्तसामान्याभावस्याऽसत्वे । अभावे यत्किञ्चिदेकत्वप्रवेशे चेत्यपि बोध्यम् । **निरुक्तेति** । पारिभाषिकेत्यर्थः यत्किञ्चिदेकाभावप्रतियोगितासामान्यशून्यावृत्तित्वरूपेतियावत् । **तथा च** । अतिरिक्तसामान्याभावस्वीकारे च । **धूमसामान्याभावस्यैवेति** । एवकारेण धूमविशेषाभावव्यावृत्तिः । **अवच्छेदकत्वमितीति** । पारिभाषिकावच्छेदकत्वमित्यर्थः ।

**वन्हिघटवृत्तिद्वित्व ताणीतार्णदहनवृत्ति द्वित्वाद्यवच्छिन्नप्रति-योगिताकाभावप्रतियोगितानतिरिक्तवृत्तिवन्हित्वादावतिप्रसङ्गात् ।**

ननु तादृशप्रतियोगित्वान्यूनानतिरिक्तवृत्तित्वं वाच्यम्, वन्हित्वं तु घटवृत्तितादृशप्रतियोगितान्यूनवृत्त्यत आह तार्णातार्णेति **अतिप्रसंगादिति** । तथाच व्याप्तिलक्षणाऽसंभव इति भावः ।

## ( लक्ष्मीः )

अत्र यदि सामान्याभावो न स्यात्तदा धूमत्वादेः पारिभाषिकावच्छेदकत्वं न स्यादित्याप्रतिर्बोध्या अथ सामान्याभावः प्रसिद्धो न वा। नाद्यः, प्रसिद्धस्य निराकरणायोगात्, नान्त्यः "अप्रसिद्धश्चेदलीकप्रतियोगिकतया धूमसमान्याभावो नास्तीत्यभावरूपाऽपादकाप्रसिद्धिः, तथा च धूमत्वादौ अनवच्छेदकत्वापत्तिदानमसङ्गतमिति चेन्न । सामान्याभावो नास्तीत्यस्य विशेषाभावकूटत्वातिरिक्ताभावत्वावच्छेदेन सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वं नास्तीत्यर्थे तात्पर्यात् । सामान्याभावो नास्तीत्यस्य सामान्याभावसत्वे तत्तद्विशेषाभावकूटत्वातिरिक्तसामान्याभावत्वावच्छेदेन सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वसंभवेन तदभावसाधनाऽसंभवात् । तथा च धूमत्वादिरूपसामान्यधर्मावच्छिन्ने तत्तद्विशेषाभावकूटत्वातिरिक्ताभावत्वावच्छिन्नानुयोगितानिरूपितप्रतियोगितानवच्छेदकीकृत्याऽनवच्छेदकत्वापत्तिरिति भावः । एतेन तादृशप्रतियोगिताकत्वाभावापादकीकृत्य धूमत्वादौ अनवच्छेदकत्वापत्तिर्न संभवति, विभिन्नधर्मिकत्वादिति निरस्तम् । आपत्तिश्च धूमत्व यदि तत्तद्विशेषाभावकूटत्वातिरिक्ताभावत्वावच्छिन्ननिरूपकतानिरूपित निरूप्यतावत्प्रतियोगितावच्छेदकं न स्यात्, वह्निमन्निष्ठतत्तद्धूमाभावनिरूपितप्रतियोगित्वाभाववदवृत्तिधर्मभिन्नं - स्यादित्याकारिका । तथाविधयत्किञ्चिदेकाभावप्रतियोगितासामान्यशून्यावृत्तित्वं पारिभाषिकावच्छेदकत्वमिति कल्पेऽसंभवमाह। **दीधितौ वह्निघटवृत्ति द्वित्वेति** । अस्य अग्रेऽवच्छिन्नप्रतियोगितायामन्वयः । तथा च वह्निघटवृत्तिद्वित्वावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानतिरिक्तवृत्तिवह्नित्वादौ इतिसमुदितार्थः । तादृशद्वित्वावच्छिन्नाभावीय-

## लक्ष्मीः

प्रतियोगिता वह्नौ घटे च प्रतियोगित्वाभाववान्पटादिस्तद्वृत्तित्व वह्नित्वेपीति भावः। **अतिप्रसङ्गादिति**। पारिभाषिकावच्छेदकत्वस्यातिप्रसंगादित्यर्थः। यद्यपि वह्निघटवृत्तिद्वित्वावच्छिन्नप्रतियोगिताकभावप्रतियोगितावच्छेदकत्वं आधेयतासंबन्धेन वह्नेर्घटस्य च वह्नित्वस्य घटत्वस्य द्वित्वद्वित्वत्वयोश्च कल्पने गौरवाल्लाघवाद्वह्निघटोभयाभावमादायाऽसंभवदानं युक्तम्। तथापि प्रतियोगितायां साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वनिवेशाभिप्रायेण द्वित्वावच्छिन्नाभावाभिधानमित्यस्मद्गुरवः। तेजोघटोभयाभावमादायाऽव्याप्तिताद्वस्थ्याच्चेति ध्येयम्। शङ्कते। **नन्विति**। **तादृशेति**। हेतुसमानाधिकरणाभावेत्यर्थः। **प्रतियोगित्वान्यूनानतिरिक्तवृत्तित्वमिति**। तादृशप्रतियोगिताव्यापकत्वे सति तादृशप्रतियोगित्वाभाववद्वृत्तित्वमित्यर्थः। **वाच्यमिति**। पारिभाषिकावच्छेदकत्वं वाच्यमित्यर्थः। वह्निघटोभयाभावमादाय प्रसक्तमसंभवं निराकरोति। **वह्नित्वं तु इति**। **घटवृत्तीति**। घटवृत्तिर्या वह्निघटोभयाभावप्रतियोगिता तन्न्यूनवृत्तीत्यर्थः। तथा च तादृशप्रतियोगिताव्यापकत्वाभावाद्वह्नित्वं न पारिभाषिकमिति भावः। **अतिप्रसंगादिति**। वह्नित्वस्य पारिभाषिकावच्छेदकत्वप्रसंगादित्यर्थः। वह्नित्वस्य तार्णातार्णोभयाभावप्रतियोगिताव्यापकत्वाद्व्याप्यत्वाच्चेति भावः। तथा च। वह्नित्वस्य पारिभाषिकावच्छेदकत्वे च।

न च धर्मविशिष्टान्यत्वं प्रतियोगियां निवेशनीयम्। वै०स्वावच्छिन्नत्व स्वेतरावच्छिन्नत्वोभयसं०। तथा च नोक्तोभयाभावमादायाऽसंभवः। न च वन्हिधूमोभयवान् वन्हेरित्यादावतिव्याप्तिः, साध्याभावस्य लक्षणाघटकत्वादिति वाच्यम्। न च अयोगोलकान्यत्वविशिष्टाभावमादायाऽतिव्याप्तिवारणमिति वाच्यम्। तस्य प्रतियोगितायां साध्यतावच्छेदकातिरिक्ताऽभावानवच्छिन्नत्वनिवेशेनैव वारणात्।

अन्यथा वन्हिमान् धूमादित्यत्र पर्वतान्यत्वविशिष्टाभावमादाया व्याप्तेरिति। अथ धर्मविशिष्टान्यत्वमपहाय प्रतियोगितायां साध्यतावच्छेदकातिरिक्तव्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशनीयम्। तथा चो-

**एतेनाऽन्यूनवृत्तित्वविशेषितमपि परास्तम् । अत एव नाना-प्रतियोगिवृत्त्येकप्रतियोगिताङ्गीकारेपि न निस्तारः, लघुरूपसम-नियतगुरुरूपेण साध्यतायां सद्धेतावव्याप्तिः, तादृशतदवच्छिन्नत्वाऽप्रसिद्धेरिति चेन्न ।**

---

एतेनेति क्वाचित्क तत्र **एतेन** । तार्णातार्णोभयाभावमादाय दत्तदोषेण । सामान्याभावप्रतियोगित्वमेकेनैव समस्तप्रतियोगिवृत्तीति तदनतिरिक्तवृत्त्येव धूमत्व-मतोनोक्तातिव्याप्तिरिति प्रगल्भोक्तं दूषयति । **अत एवेति** । उक्तरी-

---

## लक्ष्मीः

भयसाध्यकव्यभिचारिणि नातिव्याप्तिः, साध्याभावस्यैव लक्षणघट-कत्वात् । एवं चोभयाभावमादाय नासंभवः, तत्र साध्यतावच्छेदकाति-रिक्तव्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वाभावादिति चेन्न । प्रमेयवन्हिधूमोभयवान् वन्हेरित्यत्र वन्हिधूमोभयत्वस्य साध्यताव-च्छेदकातिरिक्ततया तदवच्छिन्नप्रतियोगिताकसाध्याभावस्य लक्षणाऽघट-कत्वात्, अयोगोलकावृत्त्यभावप्रतियोगिताशून्येऽयोगोलकीयवन्हौ तादृशोभयत्वस्य वृत्तेः, पर्याप्तिसंबन्धेनापि उभयत्वस्य प्रत्येकवृत्तित्वाद-तिव्याप्तिरतः कल्पान्तरानुसरणमिति ध्येयम् ।

अथ प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वकल्पे प्रतियोगिता-वच्छेदके स्वसमानवृत्तित्वविशेषणमावश्यकं, तत्र च स्वपदग्राह्यं पारिभाषिकावच्छेदकम् । तच्च सन्दर्भविरुद्धम्, एतत्कल्पेपि स्वसमान-वृत्तिकधर्मावच्छिन्नं यद्धेतुमन्निष्ठाभावप्रतियोगित्वं तदभाववदवृत्ति-यत्त्वं तदन्यसाध्यतावच्छेदकेत्यादि निवेशेनैवोभयाभाववारणसंभ-वात् । द्वित्वावच्छिन्नाभावप्रतियोगित्वं च न वह्नित्वसमानवृत्तिक-धर्मावच्छिन्नमिति चेन्न । समवायेन द्रव्याभावप्रतियोगित्वस्य समवेत-द्रव्ये एव स्वीकारेण समवायेन द्रव्यसाध्यकव्यभिचारिण्यतिव्याप्तिः । समवायेन द्रव्याभावप्रतियोगित्वाभाववति गगने द्रव्यत्वस्य वृत्त्या पारि-भाषिकावच्छेदकानुपपत्त्या गगनस्यैव पारिभाषिकावच्छेदकत्वादिति । अग्रिमकल्पे च प्रतियोगितावच्छेदकद्रव्यत्वस्य पारिभाषिकावच्छेद-कत्वान्नातिव्याप्तिः । तथा चैतत्कल्पस्य सर्वसाधारण्याभावात्कल्पान्त-रानुसरणमिति ध्येयम् ।

त्या वह्नित्वादेरवच्छेदकत्वप्रसङ्गादेवेत्यर्थः। ननु प्रतियोगितानवच्छेदकमित्यत्रा-वच्छेदकत्वं स्वरूपसंबन्ध एव वाच्यम्, स्वावच्छेद्यप्रतियोगिताकत्वेन साध्यता-वच्छेदकं पुनर्विशेषणीयमतो गुरुधर्मेण साध्यतायां नातिव्याप्तिरत आह। **लघुरूपेति**। ननु धूमवान् महाकालत्वादित्यादावव्याप्तिभियेव गुरुरूपेण साध्यतायामतिव्याप्तिभियापि प्रतियोगिताधर्मिकोभयाभावघटितं लक्षणं वाच्यमतस्तदपि दूषयति लघुरूपेत्यादिनेत्यपि कश्चित्। वन्हित्वादिलघुरूपसमनियतं यत्प्रमेय-वन्हित्वादिकं तादूरूप्येण साध्यतायां धूमादावव्याप्तिरित्यर्थः। **तादृशेति**। स्वावच्छेद्यप्रतियोगिताकासाध्यतावच्छेदका–वच्छिन्नत्वाप्रसिद्धेरित्यर्थः।

## लक्ष्मीः

**दत्तदोषेणेति**। तार्णातार्णदहनोभयाभावप्रतियोगितामादायाति-प्रसंगतादवस्थ्येनेत्यर्थः। **दीधितौ। अन्यूनवृत्तित्वविशेषितमपीति**। अन्यूनवृत्तित्वविशेषितमनतिरिक्तवृत्तित्वमपीत्यर्थः। **तदनतिरिक्त-वृत्त्येवेति**। धूमसामान्याभावप्रतियोगित्वाभाववद्वृत्त्येवेत्यर्थः। **उक्तरीत्या**। तार्णातार्णोभयाभावमादाय। **अवच्छेदकत्वप्रसंगादेव**। पारिभाषिकावच्छेदकत्वापत्तिप्रसंगादेव। व्याप्तिलक्षणाऽसंभवादेवेति भावः। **दीधितौ। नानाप्रतियोगिवृत्त्येकप्रतियोगिताङ्गीकारेपीति**। तथासति "यत्किञ्चिदेकाभाव"प्रतियोगितासामान्यपर्यन्तानिवेशेपि धूमत्वादेर्धूमादिसामान्याभावप्रतियोगितावच्छेदकत्वोपपत्तिरिति - भावः। **न निस्तार इति**। अतिव्याप्तिवारणेपि असंभवस्याऽवारणा-दिति भावः। उभयत्वादिरूपव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताया अव्यासज्यवृत्तितया "प्रत्येकमपिप्रतीतेः" स्वपर्याप्त्यधिकरणपर्याप्तत्वं निवेश्यापि प्रतियोगितायां वन्हित्वादावतिप्रसंगवारणाऽसंभवादि-त्यपि बोध्यम्। **स्वरूपसंबन्ध एवेति**। एवकारेणाऽनतिरिक्तवृत्तित्व-रूपाऽवच्छेदकत्वव्यावृत्तिः। तदा प्रमेयधूमवान् वन्हेरित्यादावतिव्याप्तिं निराकरोति। **स्वावच्छेद्यप्रतियोगिताकत्वेनेति**। स्वं साध्यतावच्छेदकं। **विशेषणीयमिति**। तथा च हेतुमन्निष्ठाभावप्रतियोगितानिरूपितस्वरूप-

**प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य विवक्षितत्वात् ।**

**प्रतियोगितावच्छेदकेति ।** हेतुसमानाधिकरणाभावप्रतियोगिताया यदवच्छेदकं तदभावदवृत्तित्वस्य मूलस्थप्रतियोगितावच्छेदकान्तेन विवक्षितत्वादित्यर्थः ।

## लक्ष्मीः

संबन्धरूपावच्छेदकत्वाभाववत्वे सति स्वावच्छिन्नप्रतियोगिताकं यत्साध्यतावच्छेदकमित्यादि । **नातिव्याप्तिरिति** । साध्यतावच्छेदकप्रमेयधूमत्वे सत्यन्तदलसत्वेपि विशेष्यदलाभावात्, प्रमेयधूमत्वावच्छिन्नत्वस्य कुत्रापि प्रतियोगितायामप्रसिद्धत्वादिति भावः । **अव्याप्तिरिति** । कुत्रापि प्रतियोगितायां प्रमेयवह्नित्वावच्छिन्नत्वाप्रसिद्धेरिति भावः । **वाच्यमिति** । तथा च प्रमेयधूमवान् वह्नेरित्यादौ साध्यतावच्छेदकप्रमेयधूमत्वादिरूप गुरुधर्मावच्छिन्नत्वाऽप्रसिद्ध्या तद्घटितोभयाभावाप्रसिद्ध्या नातिव्याप्तिरित्याशयः । **तदपि ।** प्रतियोगिताधर्मिकोभयाभावघटितलक्षणमपि । **अव्याप्तिरिति ।** तथा च प्रमेयवह्निमान् धूमादित्यादौ प्रमेयवह्नित्वरूपगुरुधर्मावच्छिन्नत्वाऽप्रसिद्ध्या तद्घटितोभयाभावाऽप्रसिद्ध्याऽ व्याप्तिरिति भावः । अग्रेऽव्याप्तिवारणात्किञ्चिदित्यनेनाऽस्वरसः सूचितः ।

**विवक्षितत्वादिति** । तथा च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाभाववदवृत्तिधर्मः पारिभाषिकावच्छेदकस्तदन्यसाध्यतावच्छेदकेत्यादि । तथा च धूमादिसामान्याभावप्रतियोगितायाः प्रतिधूमादिकं भिन्नत्वेपि तत्प्रतियोगितावच्छेदकधूमत्वादेरैक्येन धूमत्वानतिरिक्तवृत्तित्वं धूमत्वादावक्षतमिति भावः । प्रमेयधूमवान् वन्हेरित्यादौ वन्हिमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वानतिरिक्तवृत्तित्वस्य प्रमेयधूमत्वे सत्वान्नातिव्याप्तिः । **तेनैव** । प्रतियोगितावच्छेदकतावच्छेदकसंबन्धेनैव । **तदभावः** । प्रतियोगितावच्छेदकाभावः । प्रतियोगितावच्छेदकनिष्ठप्रतियोगितायां प्रतियोगितावच्छेदकताघटकसंबन्धावच्छिन्नत्वानुपादाने संबन्धसामान्यावच्छिन्नत्वं यत्किञ्चित्संबन्धावच्छिन्नत्वं वा निवेश्यम् । आद्ये । **तेनेति** । प्रतियोगितावच्छेदकताघटकसंब-

अत्र च येन संबन्धेन प्रतियोगितावच्छेदकत्वं तेनैव तदभावोग्राह्यः। तेन धूमादिमन्निष्ठप्रतियोगितावच्छेदकस्य घटत्वादेः कालिकादिसंबन्धेनाभाववति आत्मादौ वन्हित्वादेः समवायेनाऽवृत्तावपि नोक्तावच्छेदकत्वम्, न वा धूमत्वादेः-संयोगादिसंबधेन स्वाभाववति समवेतत्वेपि अवच्छेदकत्वहानिः।

## लक्ष्मीः

न्धेन प्रतियोगितावच्छेदकाभावनिवेशेन। वन्हिमान् धूमादित्यादौ इति शेषः। **कालिकादिसंबन्धेनेति**। कालिकसंयोगसमवाय-स्वरूपादिसंबन्धसामान्येनेति यावत्। **नोक्तावच्छेदकत्वमिति**। न पारिभाषिकावच्छेदकत्वमित्यर्थः। प्रतियोगितावच्छेदकतावच्छेदकीभूतसमवायेन घटत्वाभाववति वन्हित्वस्य वृत्तेरिति भावः। द्वितीये **नवेति**। धूमत्वादेरिति। अस्य समवेतत्वेपीत्यनेन संबन्धः। धूमवान् न्हेरित्यादौ वन्हिमन्निष्ठाभावप्रतियोगितावच्छेदकस्येत्यादिः। **स्वाभाववति**। धूमत्वाभाववति। धूमे इति यावत्। **अवच्छेदकत्वहानिरिति**। समवायेन धूमत्वाभाववति घटादौ धूमत्वस्याऽवृत्तेरिति भावः।

संबन्धसामान्यावच्छिन्नत्वं च संबन्धत्वव्यापकत्वं प्रतियोगितावच्छेदकाभावीयप्रतियोगितायां निवेश्यम्, व्यापकता च स्वनिरूपितावच्छेदकतावत्वसंबन्धेन। तथा चान्यतमसंबन्धावच्छिन्नप्रतियोगिताकप्रतियोगितावच्छेदकाभावमादायाव्याप्तिः। सर्वेषामेव-संबन्धानामन्यतमत्वेन संसर्गता।

यत्किञ्चित्संबन्धावच्छिन्नत्वं च संबन्धत्वव्याप्ययत्किञ्चिद्धर्मावच्छिन्नसंसर्गताकत्वं तादृशप्रतियोगितायां निवेश्यम्, तथा च वन्हिमान् धूमादित्यादावव्याप्तिवारणसंभवेपि धूमवान् वह्नेरित्यादावतिव्याप्तिरिति भावः। स्वप्रतियोगितावच्छेदकतावच्छेदकीभूतानन्तसंबन्धानां निवेशे गौरवादाह। **यत्त्विति**। **तदभावः**। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाभावः। तथा च वन्हिमान् धूमादित्यादौ समवायेन "हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूत" घटत्वाभाववति वन्हौ घटत्वस्यावृत्त्या लक्षणसमन्वयः। धूमवान् वन्हेदित्यादौ समवायेन तादृशधूमत्वाभाववति धूमत्वस्यावृत्त्या नातिव्याप्तिः।

यत्तु साध्यतावच्छेदकताघटकसंबन्धेन तदभावोग्राह्य इति। तत्तुच्छम्। धूमत्वप्रकारकप्रमाविशेष्यवान् वन्हेरित्यादावतिव्याप्त्यापत्तेः। लघुतया हेतुमन्निष्ठ-तादृशप्रमाविशेष्याभावप्रतियोगितावच्छेदकीभूतस्य धूमत्वादेः स्वरूपसंबन्धेना-भाववति धूमे एव तादृशप्रमाविशेष्यत्वस्य वृत्तेः।

## लक्ष्मीः

**तत्तुच्छमिति लघुतयेति।** धूमत्वप्रकारकप्रमाविशेष्यत्वापेक्ष-येत्यादिः। **स्वरूपसंबन्धेनेति।** साध्यतावच्छेदकतावच्छेदकीभूतेने-त्यादिः। **धूमे एवेति।** स्वरूपसंबन्धेन धूमत्वाभावस्य केवलान्वयित्वा-दिति भावः। **तादृशेति।** धूमत्वप्रकारकेत्यर्थः।

अथात्र प्रतियोगिवैयधिकरण्यघटकप्रतियोगितावच्छेदकवैशिष्ट्यं यदि साध्यतावच्छेदकताघटकसंबन्धेनोच्यते तदोक्तातिव्याप्तिताद-वस्थ्यम्, लघुतया धूमत्वप्रकारकप्रमाविशेष्याभावप्रति योगितावच्छेदकधूमत्वस्य स्वरूपेण वैशिष्ट्याप्रसिद्ध्या साध्याभाव-स्य लक्षणाघटकत्वात्। प्रतियोगितावच्छेदकानुधावनस्य स्वसमान-वृत्तिकत्वस्य च वैयर्थ्यप्रसंगाच्च। प्रतियोगितानतिरिक्तवृत्तित्वस्यैव-सम्यक्त्वात्। साध्यतावच्छेदकतावटकसंबन्धेन प्रतियोगिवैयधिकर-ण्यघटकप्रतियोगितावच्छेदकवैशिष्ट्याभिधानादेव तार्णातार्णोभयत्वा वच्छिन्नाभावस्य लक्षणाघटकतया तमादाय वन्हित्वस्य पारिभाषिका-वच्छेदकत्वविरहादिति चेन्न। उक्तातिव्याप्तिवारणाय प्रतियोगिता-वच्छेदकताघटकसंबन्धेनैव प्रतियोगितावच्छेदकवैशिष्ट्यस्य प्रतियोगि-वैयधिकरण्यघटकत्वात्। तथा च वन्हित्वप्रकारकप्रमाविशेष्यवान् धूमादित्यादौ तार्णातार्णोभयाभावमादाय वन्हित्वप्रकारकप्रमाविशेष्य-त्वस्य पारिभाषिकावच्छेदकत्ववारणाय प्रतियोगितावच्छेदकत्वानु-धावनस्य स्वसमानवृत्तिकत्वविशेषणस्य चावश्यकत्वादिति ध्येयम्।

ननु रूपवान् पृथिवीत्वादित्यादौ विषयितया रूपत्ववद्ज्ञानाभाव-प्रतियोगितावच्छेदकरूपत्वस्य साध्यतावच्छेदकताघटकीभूतसमवायेना-भाववति ज्ञाने रूपत्वस्यावृत्तित्वादव्याप्तिसम्भवेऽतिव्याप्तिदानमसंगत मिति चेन्न। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतायां साध्यतावच्छेद-कताघटकसंबन्धावच्छिन्नत्वनिवेशेनाऽव्याप्तिवारणात्।

तद्वदवृत्तित्वं च स्वरूपसंबन्धेन तद्वति साध्यतावच्छेदकताघटकसंबन्धेनाऽवर्त्तमानत्वम्,नातो धूमत्वाभावस्यैव कालिकसंबन्धेनाश्रये धूमे समवायेन,स्वरूपसंबन्धेन-तदाश्रये स्पन्दादौ कालिकविशेषणतया धूमत्वस्य वर्तमानत्वादवच्छेदकत्वहानिः।

## लक्ष्मीः

**तद्वदवृत्तित्वं च।** हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाभाववदवृत्तित्वं च। **तद्वति।** तादृशप्रतियोगितावच्छेदकाभावाधिकरणे। **अवर्तमानत्वं।** वृत्तित्वाभावः। स्वरूपसंबन्धेन तादृशप्रतियोगितावच्छेदकाभावाधिकरणत्वविवक्षायाः प्रयोजनमाह। **नात इति। धूमत्वाभावस्यैवेति।** धूमवान् वन्हेरित्यादौ वन्हिमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वाभावस्यैवेत्यर्थः। **समवायेनेति।** अस्य धूमत्वस्य वर्त्तमानत्वादित्यनेनान्वयः। **नावच्छेदकत्वहानिरिति।** न पारिभाषिकावच्छेदकत्वहानिरित्यर्थः। स्वरूपेण धूमत्वाभावाधिकरणे धूमत्वस्याऽवृत्तेरिति भावः। न च घटभेदविशिष्टस्य संयोगेन साध्यतायां व्यभिचारिणि प्रमेयत्वहेतौ साध्याभावप्रतियोगितावच्छेदकीभूत घटभेदाभावस्य घटत्वस्य स्वरूपेणाधिकरणाप्रसिद्ध्याऽतिव्याप्तिरितिवाच्यम्। प्रतियोगितावच्छेदकताघटकसंबन्धेनेत्यस्य स्वप्रतियोगितावच्छेदकवत्ताग्रहविरोधिताघटकसंबन्धेन प्रतियोगितावच्छेदकाभाववत्त्वनिवेशे तात्पर्यात्। साध्यतावच्छेदकताघटकसंबन्धेन वर्तमानत्वविवक्षायाः प्रयोजनमाह। **स्वरूपसंबन्धेन चेति। तदाश्रये इति।** वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वाभावाश्रये इत्यर्थः। **नावच्छेदकत्वहानिरिति।** तादृशस्पन्दादौ साध्यतावच्छेदकताघटकसमवायेन धूमत्वस्याऽवृत्तेरिति भावः।

यद्यपि साध्यतावच्छेदकताघटकसंबन्धेन तादृशप्रतियोगितावच्छेदकस्याभावः प्रतियोगितावच्छेदकताघटकसंबन्धेनाऽवर्तमानत्वमित्युक्तावपि धूमत्वप्रकारकप्रमाविशेष्यवान् वह्नेरित्यादौ नातिव्याप्तिः, स्वरूपेण धूमत्वाभाववति धूमे समवायेन धूमत्वप्रकारकप्रमाविशेष्यत्वस्याऽवृत्तेः। तथापि वह्नित्वप्रकारकप्रमाविशेष्यवान् धूमादित्यादौ

न च तथापि समवायेन प्रमेयस्य साध्यतायां भावत्वादिहेतावतिव्याप्तिः, प्रमेयत्व-रूपस्यावच्छेदकस्याभावाप्रसिद्धया प्रमेयाभावस्य लक्षणाघटत्वादिति वाच्यम्। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मान्यूनवृत्ति तत्वस्यैव विवक्षितत्वात्। अत एव समवायेन सत्ताश्रयस्य साध्यत्वेपि तादृशावच्छेदकीभूतस्य सत्त्वस्याभाववति सामान्यादौ साध्यतावच्छेदकताघटकीभूतसमवायसंबन्धेन वृत्तेरप्रसिद्धावपि भावत्वादिहेतौ नातिव्याप्तिः।

## लक्ष्मीः

तार्णत्वाद्यभाववति समवायेन वह्नित्वप्रकारकप्रमाविशेष्यत्वस्यावृत्त्याऽव्याप्तिः स्यादिति ध्येयम्।

**न चेति।** वाच्यमित्यनेनाऽन्वयः। **तथापि।** प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्युक्तावपि। **अवच्छेदकस्य।** हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य। **लक्षणाघटकत्वादिति।** घटाद्यभावस्य लक्षणघटकत्वेपि तादृशप्रतियोगितावच्छेदकीभूतघटत्वाभाववति अवर्तमानं घटत्वमेव, "नतु प्रमेयत्वं तस्य केवलान्वयित्वात्" तदन्यत्वस्य साध्यतावच्छेदकीभूते प्रमेयत्वे सत्वादतिव्याप्तिरिति भावः। **यद्धर्मान्यूनवृत्तीति।** यद्धर्मव्यापकमित्यर्थः। **तत्वस्यैव।** तद्धर्मत्वस्यैव। एवकारेण प्रतियोगितावच्छेदकाभाववदवृत्तित्त्वरूपपारिभाषिकावच्छेदकत्वव्यवच्छेदः **विवक्षितत्वादिति।** प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वशब्देनेत्यादिः। तथा च भावत्वसमानाधिकरणस्य समवायेन प्रमेयाभावस्य प्रतियोगितावच्छेदकं प्रमेयत्वं यद्धर्मपदग्राह्यप्रमेयत्वव्यापकमिति नातिव्याप्तिः। **अतएव।** निरुक्ततत्त्वस्य पारिभाषिकावच्छेदकत्वादेव। **तादृशावच्छेदकीभूतस्य।** हेतुसमानाधिकरणो यः सत्तावान्नास्तीत्यभावस्तत्प्रतियोगितावच्छेदकीभूतस्य। **अप्रसिद्धावपीति।** सत्तावदभावस्य लक्षणाघटकत्वेन घटाभावप्रतियोगितावच्छेदकीभूतघटत्वाभाववति घटत्वस्यावर्तमानत्वात्तदन्यत्वस्य च सत्तायां सत्वेपीति भावः। **नातिव्याप्तिरिति।** तादृशप्रतियोगितावच्छेदकीभूतसत्त्वस्य सत्त्वव्यापकत्वादिति भावः।

नन्‌ प्रतियोगिताधर्मिकोभयाभावघटितकल्पे एवं चेत्यादिना

इदन्तु चिन्त्यते । तादृशप्रतियोगितावच्छेदकानतिरिक्तवृत्तिभिन्नत्वापेक्षया नञर्थद्वयाप्रवेशेन लाघवात्तादृशावच्छेदकं यद्यत्तत्तत्प्रत्येकारिक्तवृत्तित्व साध्यतावच्छेदकस्य विशेषण वक्तुमुचितमिति ।

## लक्ष्मीः

निष्कर्षस्य वक्ष्यमाणतयाऽनवच्छेदकत्वघटितलक्षणे एवेदानीं न पारिभाषिकावच्छेदकत्वनिर्वचनमिति प्रतियोगितावच्छेदकातिरिक्तवृत्ति यत्साध्यतावच्छेदकं तदवच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्येव कुतो नोक्तमित्याह । इदन्तु चिन्त्यते इति । अत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतघटत्वातिरिक्तवृत्तित्वस्य धूमत्वे सत्वादतिव्याप्तिरतो यद्यदिति । तथा च तादृशप्रतियोगितावच्छेदकयद्यदन्तर्गतधूमत्वातिरिक्तवृत्तित्वाभावान्नातिव्याप्तिः ।

अथात्र प्रमेयसाध्यकभावत्वहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतप्रमेयत्वाभावाऽप्रसिद्ध्या गृहीतुमशक्यत्वाद् घटत्वादेश्च तादृशस्याभाववति प्रमेयत्वस्य सत्वादतिव्याप्तिरिति चेन्न । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदव्यापकं तत्त्वस्यैव साध्यतावच्छेदके विवक्षितत्वात् ।

न च नञ्द्वयाऽप्रवेशे सत्तावान् जातेरित्यत्राऽव्याप्तिः साध्यतावच्छेदकसत्तात्वस्य तादृशप्रतियोगितावच्छेदकविशिष्टसत्तात्वातिरिक्तत्वाभावादिति वाच्यम् । नञ्द्वयप्रवेशेपि सत्तात्वस्य तादृशप्रतियोगितावच्छेदकविशिष्टसत्तात्वानतिरिक्तवृत्तितया तद्भिन्नत्वाभावेनाव्याप्तितादवस्थ्यात् । यदि च नञ्द्वयप्रवेशपक्षे तादृशानुपपत्त्यैव वस्तुतस्तु इत्यादिना प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य निष्कर्षकरणान्नानुपपत्तिरित्युच्यते तदा नञ्द्वयाप्रवेशेपि प्रतियोगितावच्छेदकातिरिक्तवृत्तिसाध्यतावच्छेदकेत्यादेः तादृशप्रतियोगितावच्छेदकावच्छिन्नाभाववति संबद्धं यद्विशिष्टसामान्यं तादृशप्रतियोगितावच्छेदकं यद्विशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकं वा तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति निष्कर्षकरणेनानुपपत्त्यभावात् । परन्तु नञ्द्वयप्रवेश इव तदप्रवेशेपि वह्निमान् धूमादित्यादौ वह्नित्वादेस्तादृशप्रतियोगितावच्छेदकतार्णातार्णोभयत्वाद्यतिरिक्तवृत्तित्वाभावादव्याप्त्या

ननु धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वन्ह्यादिनिष्ठं तार्णातार्णदहनोभयत्वं यावत्त्वं वा तदनतिरिक्तवृत्त्येव वह्नित्वादिकमिति व्याप्तिलक्षणाऽसंभवीत्यत आह । स्वसमानवृत्तिकेति ।

लक्ष्मीः

स्वसमानवृत्तिकत्वविशेषणमावश्यकम् । धूमत्वादेस्तादृशप्रतियोगितावच्छेदकघटत्वाद्यतिरिक्तवृत्तित्वादतिव्याप्तिवारणाय तादृशप्रतियोगितावच्छेदकं यद्यत्प्रत्येकं तदतिरिक्तवृत्तित्वस्यैव साध्यतावच्छेदके निवेशनीयम् । स्वपदं चात्र साध्यतावच्छेदकपरम् । तथा च साध्यतावच्छेदकसमानवृत्तिकतादृशप्रतियोगितावच्छेदकं यद्यत्प्रत्येकं तदतिरिक्तवृत्ति यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरिति पर्यवसन्नम् । तत्तद्व्यक्त्यभावमादायलक्षणसमन्वयः । एवं च वह्निमान् धूमादित्यादौ महानसीयवह्नित्वादेर्वह्नित्वसमानवृत्तिकतादृशप्रतियोगितावच्छेदकत्वेन तदतिरिक्तवृत्तित्वस्य वह्नित्वादौ सत्वेन लक्षणसमन्वयेपि कालोघटवान् महाकालपरिमाणादित्यादावव्याप्तिः, तत्र गगनत्वस्यैव तादृशप्रतियोगितावच्छेदकत्वेन तस्य साध्यतावच्छेदकसमानवृत्तिकत्वाभावेन साध्यतावच्छेदकसमानवृत्तिकतादृशप्रतियोगितावच्छेदकाप्रसिद्धेः । नञ्द्वयप्रवेशे च स्वपदस्य पारिभाषिकावच्छेदकपरतया नोक्ताव्याप्तिरित्यस्मद्गुरुचरणाः ।

वस्तुतस्तु नञ्द्वयाघटितोक्तलक्षणस्य लघुत्वेपि लक्षणान्तरत्वेन मूलकृदुक्तानवच्छेदकत्वघटितलक्षणस्य नञ्द्वयघटितत्वेनावच्छेदकत्वस्यानतिरिक्तवृत्तित्वरूपत्वे नञ्द्वयप्रवेश आवश्यक एव यथा सन्निवेशे च न वैयर्थ्यमिति ।

**नन्विति । धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकमिति ।** धूमादिमन्निष्ठो यस्तार्णातार्णोभयं नास्तीत्यभावः यावद्वह्निर्नास्तीत्यभावश्च तत्प्रतियोगितावच्छेदकमित्यर्थः । **तदनतिरिक्तवृत्त्येवेति ।** तार्णातार्णोभयत्वाभाववान्, एवं वह्निनिष्ठयावत्त्वाभाववान् घटादिस्तद्वृत्त्येवेत्यर्थः । तथा च तादृशोभयत्वाद्यभाववति घटादौ वह्नित्वादेरवर्तमानत्वादसंभव इति भावः । नचोभयत्वादेरुभयादिपर्याप्ततया प्रत्येकं तदभावसत्वादुभयत्वाभाववान् वह्निरपि तत्र वह्नित्वस्य वर्तमानत्वान्ना-

## लक्ष्मीः

संभवः। अतएवाऽयं न द्वौ इति प्रतीतिरुपपद्यते इति वाच्यम्। उभयत्रैव प्रत्येकं द्वित्वाभावसत्वे इमौ न द्वौ इति प्रतीत्यापत्तेः, उभयस्य प्रत्येकानतिरेकात्। तथा च तादृशोभयत्वाभाववान् घटादिरेवेत्यसंभव इति।

अथात्र महानसीयतेजस्त्वावच्छिन्नाभावमादायाऽव्याप्तिवारणाय प्रतियोगितायां धर्मविशिष्टान्यत्वं निवेशनीयम्। वै० स्वावच्छिन्नत्व-स्वेतरावच्छिन्नत्वोभयसं०। तथा च वन्हिघटवृत्तिद्वित्वावच्छिन्नाभावमादायासंभवाभावात्स्वसमानवृत्तिकत्वदलं व्यर्थमिति चेन्न। महानसीयवन्हिभिन्नवन्हिमान् धूमादित्यादावतिव्याप्तिवारणायोक्तस्य साध्यतावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपकत्वरूप "साध्यतावच्छेदकतदितरोभयानवच्छिन्नत्वस्य" वह्निघटवृत्तिद्वित्वात्मकव्यक्त्यवच्छिन्नप्रतियोगितायां सत्त्वात्तन्निरूपकाभावमादायाव्याप्तिवारणायैव स्वसमानवृत्तिकत्वंनिवेश्यम्। वै० प्रसिद्धचतुष्टयसंबन्धेन।

अथात्र रूपवान् पृथिवीत्वादित्यत्र विषयितया रूपत्ववद्ज्ञानाभावमादायाव्याप्तिवारणाय प्रतियोगितावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वं निवेशनीयम्, तथा च वह्निमान् धूमादित्यत्र पर्याप्तिसंबन्धावच्छिन्नतार्णातार्णदहनवृत्तिद्वित्वनिष्ठावच्छेदकताकप्रतियोगिताकाभावस्य लक्षणाघटकत्वात्कथमव्याप्तिः। नचोक्ताभावप्रतियोगितावच्छेदकताघटकविषयितासंबन्धावच्छिन्न - प्रतियोगिताकप्रतियोगितावच्छेदकाभाववति रूपे रूपत्वस्य सत्वादव्याप्तिविरहेण साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वमफलमिति वाच्यम्। यत्र स्वरूपेण धीविशेषविषयत्वरूपतार्णातार्णदहनवृत्तिद्वित्वविशिष्टस्य संयोगेनसाध्यता धूमादेर्हेतुता तत्र प्रत्येकवन्ह्यधिकरणे प्रतियोगिव्यधिकरणहेतुसमानाधिकरणस्य तादृशद्वित्वनिष्ठपर्याप्तिसंबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावस्य प्रतियोगितावच्छेदकाभाववति साध्यतावच्छेदकस्याऽसत्वादव्याप्तिरतः साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वं निवेशनीयमिति चेन्न। साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वमित्यनेन साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकनिष्ठत्वोभयाभावस्य विवक्षितत्वात्। अन्यथा वह्नित्वप्रतियोगिकसमवायेन वह्नित्वविशिष्टस्य

**स्वसमानवृत्तिकश्चावच्छेदकं ग्राह्यम् ।**

स्वमनतिरिक्तवृत्तित्वेनाभिमतम् ।

( लक्ष्मीः )

संयोगेन साध्यतायां सद्धेतौ हेतुसमानाधिकरणस्य तत्संबन्धावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावाप्रसिद्ध्याऽव्याप्तेः । एवं च तार्णातार्णदहनवृत्तिद्वित्वनिष्ठावच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्वसत्वेपि साध्यतावच्छेदकानिरूपितत्वाभावसत्वात्तादृशद्वित्वावच्छिन्नाभावमादायाव्याप्तिसंगतिः ।

तथा च तार्णातार्णोभयत्वादेर्वह्नित्वादिसमानवृत्तिकत्वविरहेण वह्नित्वादेस्तार्णातार्णोभयत्वानतिरिक्तवृत्तित्वेपि न पारिभाषिकावच्छेदकत्वापत्तिरिति भावः । **स्वमनतिरिक्तवृत्तित्वेनाभिमतमिति ।** नन्वत्र हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमेव स्वपदेन ग्राह्यम् । तादृशप्रतियोगितावच्छेदकसमानवृत्तिकत्वे सति तदनतिरिक्तवृत्तित्वं पारिभाषिकावच्छेदकत्वम् । तावतैव तार्णातार्णोभयाभावमादाय नाव्याप्तिः । एवमनुगमे लाघवमपि । तथा हि हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टत्वं पारिभाषिकावच्छेदकत्वम् । वै० स्वसमानवृत्तिकत्व, स्वानतिरिक्तवृत्तित्वोभयसं० । भवन्मते तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टत्वम् । वै०स्वानतिरिक्तवृत्तित्व, स्ववृत्तित्वोभयसं० । स्ववृत्तित्वं च स्वसमानवृत्तिकत्वसं० । तथा च वृत्तित्वांशस्याधिकस्य निवेशाद् गौरवमिति चेन्न । वन्हिधूमोभयानुयोगिकसमवायेन त्रित्वविशिष्टस्य साध्यतायां वह्निहेतावतिव्याप्तेः, तथाहि-हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं लाघवाद् द्वित्वं तत्समानवृत्तिकं च न त्रित्वमिति तस्य पारिभाषिकावच्छेदकत्वविरहात । अस्मन्मते तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदयोगोलकावृत्तित्वं तच्च स्वपदग्राह्यत्रित्वपर्याप्त्यनवच्छेदकीभूतव्यासज्यवृत्तिधर्मानवच्छिन्नपर्याप्तिकमिति तदनतिरिक्तवृत्तित्वस्यैव साध्यतावच्छेदकीभूतत्रित्वे सत्वान्नातिव्याप्तिः । फलितार्थमाह । **तथा चेति ।** स्वपदस्य पारिभाषिकावच्छेदकपरत्वे चेत्यर्थः । **अर्थ इति ।** स्वसमानवृत्तिकं यद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं तदभावदवृत्ति यत्स्वं तत्पारिभाषिका-

**तत्त्वं च स्वपर्याप्त्यधिकरणपर्याप्तिकत्वम् ।**

तथा च स्वसमानवृत्तिकं यद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं तदनतिरिक्तवृत्तित्वमर्थः । यावत्त्वस्य वन्हित्वव्यापकत्वेपि वन्हित्वसमानवृत्तिकत्वाभावादेव न तस्य तादृशावच्छेदकत्वमिति भावः ।

ननु स्वसमानवृत्तिकत्वं-स्वान्यूनानतिरिक्तवृत्तित्वम्, तथा च वह्निनिष्ठयावत्त्वादेरपि समवायादिना वह्नित्वादिसमानवृत्तित्वमेवात आह । तत्त्वं चेति । स्वसमानवृत्तिकत्वं चेत्यर्थः । स्वपर्याप्तीति । न च वह्नित्वपर्याप्त्यधिकरणे यावत्येव वह्नौ वह्निवृत्तियावत्वादेः पर्याप्तत्वाद्वह्नित्वस्यावच्छेदकत्वं दुर्वारमिति वाच्यम् । स्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकत्वस्योक्तत्वात् । वह्नित्वपर्याप्त्यवच्छेदकीभूततत्तद्वह्नित्वावच्छेदेन यावत्वादेरपर्याप्तत्वात् ।

## लक्ष्मीः

वच्छेदकं तदन्यत्वं साध्यतावच्छेदके विवक्षणीयमिति । **यावत्वस्य ।** वह्निनिष्ठयावत्वस्य । **वह्नित्वव्यापकत्वेपीति ।** वह्नित्वस्य यावत्वानतिरिक्तवृत्तित्वेपीति यावत् । **तस्य ।** वह्नित्वस्य । **अवच्छेदकत्वम् ।** पारिभाषिकावच्छेदकत्वम् । **नन्विति । तथा च ।** स्वसमानवृत्तिकत्वस्य स्वान्यूनानतिरिक्तवृत्तित्वरूपत्वे च । **वह्निनिष्ठयावत्वादेरपीति ।** आदिना तार्णातार्णदहनवृत्तिद्वित्वस्य परिग्रहः । **वन्हित्वादिसमानवृत्तित्वमेवेति ।** वन्हित्वान्यूनानतिरिक्तवृत्त्येवेत्यर्थः । तथा चाऽसंभवस्तदवस्थ एवेति भावः । **अनतिरिक्तवृत्ति**त्वान्तरनिवेशवैफल्यमपि बोध्यम् । स्वान्यूनवृत्ति यत्तदनतिरिक्तवृत्तित्वस्य स्वस्मिन्नियतत्वात् । शङ्कते । **न चेति । यावत्येव वन्हाविति ।** समुदायस्य प्रत्येकानतिरिक्तत्वेन तत्तद्वन्हेर्वन्हित्वपर्याप्त्यधिकरणत्वे यावद्वन्हीनामेव वन्हित्व पर्याप्त्यधिकरण त्वादिति भावः । **अवच्छेदकत्वं ।** पारिभाषिकावच्छेदकत्वं । **दुर्वारमिति ।** हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतवन्हिवृत्तियावत्वादेः वन्हित्वपर्याप्त्यधिकरणपर्याप्तिप्रतियोगित्वादिति भावः । समाधत्ते । **स्वपर्या-**

न चैवमनतिरिक्तवृत्तित्ववैयर्थ्यम् । वन्हित्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकतत्तद्वन्ह्यन्यतरत्वादिकमादाय वन्हित्वस्यापि पारिभाषिकावच्छेदकत्वापत्तेरिति भावः ।

## लक्ष्मीः

प्त्यवच्छेदकेति । स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकेत्यर्थः । उक्तत्वादिति । तथा च स्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वस्योक्तत्वादिति भावः । वन्हित्वपर्याप्त्यवच्छेदकीभूततत्तद्वन्हित्वावच्छेदेनेति । वन्हित्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतत्तद्वन्हित्वावच्छेदेनेत्यर्थः । यावत्त्वादेरपर्याप्तत्वादिति । किन्तु वन्हिगतयावत्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकयावत्वावच्छेदेनैव यावत्वादेः पर्याप्तत्वादिति भावः । आदिना तार्णातार्णदहनवृत्तिद्वित्वस्य परिग्रहः । तथा च वह्निमान् धूमादित्यादौ नाऽसंभवः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य वह्निगतयावत्त्वादेर्यावत्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकयावत्वावच्छेदेनैव पर्याप्ततया वह्नित्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतत्तद्वह्नित्वावच्छिन्नानुयोगित्वाभावेन वह्नित्वस्य स्वपदाऽग्राह्यत्वेन पारिभाषिकावच्छेदकत्वापत्तिविरहादिति भावः ।

शङ्कते । नचेति एवं । स्वसमानवृत्तिकत्वस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशेषणत्वे । अनतिरिक्तवृत्तित्वविशेषणवैयर्थ्यमिति । स्वसमानवृत्तिकहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसमानाधिकरणं यत्त्वं तदन्यत्वस्यैव सम्यक्त्वादिति भावः । प्रमेयधूमसाध्यकस्थले प्रमेयधूमत्वसमानवृत्तिकवह्निमन्निष्ठाभावप्रतियोगितावच्छेदकधूमत्वसमानाधिकरणं यत्त्वं प्रमेयधूमत्वं तदन्यत्वस्य प्रमेयधूमत्वे विरहान्नातिव्याप्तिः । समाधत्ते । वह्नित्वपर्याप्त्यवच्छेदकधर्मावच्छिन्नपर्याप्तिकेति । वह्नित्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकतत्तद्वह्नित्वावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगीत्यर्थः । तत्तद्वन्ह्यन्यतरत्वादिकमादायेति । महानसीयवन्हिचत्वरीयवन्ह्यन्यतरत्वा-

**यावत्त्वादिकन्तु न तथा ।**

**पर्याप्तिश्च अयमेकोघटः इमौ द्वौ इति प्रतीतिसाक्षिकः स्वरूपसंबन्धविशेष एव ।**

**यावत्त्वादिकमिति ।** आदिना तार्णातार्णोभयत्वादिसंग्रहः । **न तथेति ।** न वह्नित्वपर्याप्त्यधिकरणपर्याप्तिवृत्तिकमित्यर्थः ।

ननु पर्याप्तिः समवायः स च तार्णातार्णोभयत्वादावप्यक्षत एवेत्यत आह । पर्याप्तिश्चेति । अयमेको घट इति एकमात्रवृत्तिधर्मावच्छेदेन घटत्वस्य पर्याप्तिं दर्शयितुम्, इमौ द्वौ इत्युभयमात्रवृत्तिधर्मावच्छेदेन द्वित्वस्य पर्याप्तिं दर्शयितुम्,

## लक्ष्मीः

दिकमादायेत्यर्थः । **पारिभाषिकावच्छेदकत्वापत्तेरिति** । तथा च वह्निमान् धूमादित्यत्राव्याप्तिः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतत्तद्वन्ह्यन्यतरत्वस्य 'अव्यासज्यवृत्तित्वेन' वह्नित्वसमानवृत्तिकत्वादिति भावः । अनतिरिक्तवृत्तित्वोपादाने तु वह्नित्वस्यान्यतरत्वाभाववद्वृत्तित्वान्नाव्याप्तिः । वह्निनिष्ठयावत्त्वादिकमादाय वह्नित्वादौ पारिभाषिकावच्छेदकत्वाभावं स्वयं स्फुटयति । **यावत्त्वादिकमिति ।** वह्निनिष्ठयावत्त्वादिकमित्यर्थः । आदिना तार्णातार्णदहनवृत्तिद्वित्वादेः परिग्रहः ।

शङ्कते । **नन्विति ।** स च **समवायश्च । अक्षत एवेति ।** तथा च वह्निनिष्ठयावत्त्वादेर्वह्नित्वपर्याप्त्यधिकरणपर्याप्तत्वमक्षतमेवेति भावः । **एकमात्रवृत्तिधर्मावच्छेदेनेति ।** तत्तद्व्यक्तित्वावच्छेदेनेत्यर्थः । उभयवृत्ति धर्मावच्छेदेनेति सावधारणम् । तथा च व्यासज्यद्वित्वादीनां न प्रत्येकस्मिन्पर्याप्तिरिति भावः । **अन्यथा ।** पर्याप्त्यनंगीकारे । **अविशेषप्रसंगादिति ।** समवायविषयकत्वसमानत्वादिति भावः । **इदमुपलक्षणम् ।** द्वौ घटः अयं द्वौ इत्यादिप्रतीतेरप्यापत्तिः, द्वयं-घटत्ववत्, अयं द्वित्ववानितिप्रतीत्यनुरोधेन द्वित्वेदन्त्वादेरपि घटत्वद्वित्वादिसमवायावच्छेदकत्वस्यावश्यकत्वात् । नचोक्तप्रतीतेर्द्वित्वेद-

अन्यथा द्वौ द्वित्ववानिति प्रतीत्योरविशेषप्रसंगादिति भावः । नचायमेक इत्यादि-प्रतीतेः समवायेनैवोपपत्तौ एकत्ववह्नित्वादेः पर्याप्तिसंबन्धसत्वे मानाभावात्ताद्रूप्येण व्यभिचारिणि अतिव्याप्तिरिति वाच्यम्। इदन्त्वावच्छिन्ने एव वह्नित्वमेकत्वं च पर्याप्त न तु द्वित्वमित्याद्यनुभवादेव तदभ्युपगमादिति भावः । **न वह्नित्व-पर्याप्त्यधिकरणपर्याप्तिवृत्तिकमिति** । न वह्नित्वप्रतियोगिकपर्याप्त्यनुयो-गितावच्छेदकधर्मावच्छिन्नपर्याप्तिप्रतियोगिरूपस्वमानवृत्तिकमित्यर्थः । वह्नित्वस्य प्रत्येकवह्नौ पर्याप्तत्वाद्यावत्वादेश्चातथात्वादिति भावः ।

## लक्ष्मीः

न्त्वादिसामानाधिकरण्येन घटत्वद्वित्वादिसमवायावगाहित्वस्यैवाभ्यु-पगमेनोक्तरीत्याऽवच्छेदकत्वावगाहित्वमेवाऽसिद्धमिति वाच्यम् । शाखी संयोगवानित्यादिप्रत्ययानुरोधेन शाखादौ संयोगसमवायाद्यव-च्छेदकत्वावगाहित्ववदेतत्प्रतीतेरप्यवच्छेदकत्वस्यैवोचितत्वात् प्रतीति-मात्रस्यैव सामानाधिकरण्यावगाहित्वोपगमसंभवेनावच्छेदकत्वावगा-हिप्रतीतेरुच्छेदप्रसंगाच्च । न च समवायातिरिक्तपर्याप्तेरंगीकारेपि उक्तापत्तिर्दुर्वारा, द्वित्वेदन्त्वादेर्घटत्वद्वित्वादिपर्याप्त्यवच्छेदकत्वे बाध-काभावादिति वाच्यम्। अव्यासज्यवृत्ति घटत्वादिनिरूपितपर्याप्तेरेक-मात्रवृत्तिधर्मावच्छिन्नत्वस्य, व्यासज्यवृत्तित्वादिनिरूपितपर्याप्तेरुभया-दिवृत्तिधर्मावच्छिन्नत्वस्यैव धर्मिग्राहकमानसिद्धत्वादिति संक्षेपः ।

यद्यपि समुदायपर्याप्तत्वेपि तदेकदेशप्रत्येकपर्याप्तत्वमनपवादम् समुदायस्य प्रत्येकानतिरिक्तत्वादिति, यावत्वादेर्वह्नित्वादिपर्याप्त्यधि-करणप्रत्येकवह्निपर्याप्तत्वं दुर्वारम् , तथापि स्वप्रतियोगिकपर्याप्त्यनु-योगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वस्योक्तत्वा-न्न दोषः । एकधर्मिणि पर्याप्तिसत्वेपि एकधर्मावच्छिन्ने अपर्याप्तेरिति भावः । शंकते **नचेति** । **ताद्रूप्येण** । वह्नित्वादिरूपेण । **व्यभिचारिणि** । मेयत्वादौ । **अतिव्याप्तिरिति** । वह्नित्वपर्याप्तौ मानाभावेन वह्नित्वस्य स्वपदाग्राह्यत्वात् स्वसमानवृत्तिकहेतुसमा-नाधिकरणाभावप्रतियोगितावच्छेदकघटपटोभयत्वाभाववद्वृत्तियत्त्वं घटपटोभयत्वं तदन्यत्वस्य वह्नित्वे सत्वादिति भावः । एवं च तार्णातार्णोभयाभावमादाय नोक्तासंभवसंभवः, वह्नित्वस्य स्वपदेनो-

**त्रित्वादिमपि न द्वित्वादिसमानवृत्तिकमिति द्वित्वादिना साध्यतायां नाव्याप्तिः ।**

व्यासज्यवृत्तित्व, तदन्यत्वान्यतररूपेणैव स्वसमानवृत्तिकत्वोक्त्यापि वह्नित्वादिवारणसंभवे स्वपर्याप्तीत्यादिपर्यन्तानुधावनस्य प्रयोजनमाह । त्रित्वादिकमपीति । तथा च धूमवन्निष्ठाभावप्रतियोगितावच्छेदकस्य वह्निधूमघटत्रितयत्वस्य व्यासज्यवृत्तितया स्वसमानवृत्तिकस्य तस्यैवानतिरिक्तवृत्तित्व वह्निधूमोभयत्वस्यापीति ताद्रूप्येण स्वसमानवृत्तिकत्वोक्तौ वह्निधूमोभयवान् धूमादित्यादावेव व्याप्तिलक्षणाऽव्याप्तिः स्यादिति भावः ।

लक्ष्मीः

पादानाऽसंभवादिति हृदयम् समाधत्ते । इदन्त्वावच्छिन्ने एवेति । **तदभ्युपगमात्** । एकत्ववह्नित्वादेः पर्याप्त्यभ्युपगमात् । एवं च न वह्निमान् प्रमेयत्वादित्यादावतिव्याप्तिः. वह्नित्वस्य स्वपदेनोपादानसंभवादिति तत्त्वम् ।

ननु स्वसमानवृत्तिकत्वं स्वसजातीयत्वमेव साजात्यं च व्यासज्यवृत्तित्व, तदन्यत्वान्यतररूपेण । तथा च तार्णतार्णोभयत्वादेर्वह्नित्वसमानवृत्तिकत्वाभावादसम्भववारणेपि स्वपर्याप्त्यधिकरणपर्याप्तिकत्वस्य अव्याप्तिवारणप्रयोजनमाह । **व्यासज्यवृत्तित्वेति** । दीधितौ **त्रित्वादिकमपि** । वह्निधूमघटत्रितयत्वादिकमपि **नद्वित्वादिसमानवृत्तिकमिति** । न वह्निधूमनिष्ठद्वित्वपर्याप्त्यधिकरणपर्याप्तिकं । **तथा च** । उक्तान्यतररूपेण समानवृत्तिकत्वोक्तौ च **स्वसमानवृत्तिकस्य** । द्वित्वसमानवृत्तिकस्य **तस्यैव** । तादृशत्रित्वस्यैव । **ताद्रूप्येण** । व्यासज्यवृत्तित्व, तदन्यत्वान्यतररूपेण ।

अनुगमस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टो धर्मः पारिभाषिकावच्छेदकः । वै०स्वाभाववदवृत्तित्व, स्ववृत्तित्वोभयसं० स्ववृत्तित्वं च स्वसाजात्यसं० । साजात्यं व्यासज्यवृत्तित्व, तदन्यत्वान्यतररूपेणेति ।

यद्यपि ताणांताणोंभयत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकताघटक-संबन्धः पर्याप्तिरेवः न तु समवायः, ताणमात्रसत्वेपि ताणांताणोंभयं नास्तीति प्रतीतेः। तथा च प्रतियोगितावच्छेदकताघटकपर्याप्तिसंबन्धेन तादृशोभयत्वाद्य-भाववति प्रत्येकवह्नौ वृत्तिमत्वादेव वह्नित्वादेरवच्छेदकत्वासंभवात् स्वसमानवृत्तिकेति व्यर्थम्,

## लक्ष्मीः

अथ व्यासज्यवृत्तत्वमेकत्वानवच्छिन्नानुयोगिताकपर्याप्तिकत्वम्, तथा च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य वह्निधूमघटगत-त्रित्वस्योभयान्यनिष्ठ"एकत्वानवच्छिन्नानुयोगिताक"द्वित्वावच्छिन्नानु-योगिताकपर्याप्तिकत्वरूपव्यासज्यवृत्तित्वविरहेण स्वसमावृत्तिकत्वा-भावान्नाव्याप्तिरिति चेन्न। एकत्वावच्छिन्नानुयोगिताकपर्याप्तिप्रति-योगिकान्यत्वं व्यासज्यवृत्तित्वम्। एवं तादृशत्रित्वस्यापि द्वित्व-समानवृत्तिकत्वम्,द्वित्वस्यापि त्रित्वसमानवृत्तिकत्वमित्यव्याप्ति—संगतिरिति ध्येयम्।

स्वसमानवृत्तिकत्व-विशेषणस्य वैयर्थ्यमाशङ्कते। **यद्यपीति।** **ताणमात्रसत्वेपि ताणांताणोंभयं नास्तीति प्रतीतेरिति।** एकसत्वेपि द्वयंनास्तीतिप्रतीतेरिति भावः। तादृशप्रतीतौ समवायस्य प्रतियोगिता-वच्छेदकताघटकतया भाने तु प्रतियोगितावच्छेदकतानियामकसम-वायेन द्वित्ववत् प्रत्येकप्रतियोगिनः सत्वेन ताणांताणोंभयंनास्तीति प्रतीतिर्न स्यात् अभावस्य प्रतियोगितानियामकसंबन्धेन प्रतियोगिता-वच्छेदकावच्छिन्नप्रतियोगिना समं विरोधादिति। **तथा च।** पर्याप्तेरेव तादृशाभावप्रतियोगितावच्छेदकतानियामकत्वे च **तादृशो-भयत्वाद्यभाववति।** प्रत्येकवृत्तिधर्मावच्छेदेन ताणांताणोंभयत्वा-भाववति। **अवच्छेदकत्वाऽसंभवात्।** पारिभाषिकावच्छेदकत्वा-संभवात् **किन्तुघटादावेव।** वह्निभिन्ने एव। तथा च पर्याप्तिसंबन्धेन ताणांताणोंभयत्वाभाववति वह्निभिन्ने वह्नित्वस्याऽवृत्त्या वह्नित्वस्य-पारिभाषिकावच्छेदकत्ववारणाय स्वसमानवृत्तिकत्वमवच्छेदकविशे-षणमिति भावः। **अन्यथा।** प्रत्येकस्मिन्पर्याप्तिसंबन्धेन द्वित्वाभा-

तथापि प्रत्येकवह्नौ पर्याप्तिसंबन्धेनापि न तारणांतारणोभयत्वादेरभावः किन्तु घटादावेव। अन्यथा तत्संबन्धेन प्रत्येकावृत्तिधर्मस्य तत्संबन्धेन समुदायावृत्तित्वनियमात् उभयत्रैव द्वित्वाभावसत्वादिमौ न द्वौ इत्यपि प्रतीत्यापत्तेः।

न चैकस्य द्वित्वपर्याप्त्यधिकरणत्वे घटद्वयशून्येपि गृहादौ अत्र घटौ इति प्रतीतिः प्रमा स्यादिति वाच्यम्। तद्गृहनिष्ठे घटे घटद्वयत्वावच्छेदेन तद्गृहवृत्तित्वविरहात्। घटद्वयत्वावच्छेदेन तद्गृहवृत्तित्वावगाहिन्याः प्रोक्तप्रतीतेर्भ्रमत्वात्। अत एव घटौ न तद्गृहनिष्ठौ इत्याकारकधीस्तत्र प्रमा, तद्गृहस्थितस्यापि घटस्य घटद्वयत्वावच्छेदेन तन्निष्ठत्वाभावसभवात्। घटपटयोर्न घटत्वमिति प्रतीतेः प्रमात्वानुरोधेन व्यासज्यवृत्तिधर्मावच्छिन्नाधिकरणताकस्य प्रतियोगिमत्यपि तदभावस्य सर्वसम्मतत्वात्।

---

## लक्ष्मीः

वसत्वे। **तत्संबन्धेन** पर्याप्तिसंबन्धेन। **प्रत्येकावृत्तिधर्मस्य** उभयत्वस्य। **तत्संबन्धेन** । पर्याप्तिसंबन्धेन। **नियमादिति** । ननु उभयत्वे उभयनिरूपितवृत्तित्वसत्वे प्रत्येकनिरूपितवृत्तित्वस्यापि सत्वात्कथं प्रत्येकावृत्तित्वम्। नचोभयत्वं उभयत्वावच्छिन्ननिरूपितवृत्तित्वाभाववान् प्रत्येकवृत्तिधर्मावच्छिन्ननिरूपकताकवृत्तित्वाभाववत्वादिति व्यतिरेकानुमानेनोभयनिरूपितवृत्तित्वाभावः साधनीय इति वाच्यम्। स्वमते उभयत्वे निरूक्तहेतोः सत्वेन तत्र उभयवृत्तित्वाभावस्यापत्या तद्धेतोरप्रयोजकत्वात् इति चेन्न। यदेकत्वावच्छेदेन यदभाववत् तत् तदुभयत्वावच्छेदेन तदभाववदिति व्याप्त्या उभयत्वावच्छेदेनाप्युभयाभावप्रसंगात्। व्यतिरेकेण दृष्टान्तत्वादिति ध्येयम्। **उभयत्रैव** । उभयस्मिन्नेव। **प्रत्येकं** । प्रत्येकवृत्तिधर्मावच्छेदेन। **प्रतीत्यापत्तेरिति** । न च तादृशप्रतीतौ इमौ द्वौ इति तदुभयत्वावच्छेदेन द्वित्ववत्ताज्ञानं विरोधीति वाच्यम्। तदुभयत्वे स्वरूपसंबन्धरूपावच्छेदकत्वावगाहिद्वित्ववत्ताज्ञानस्य स्वरूपसंबन्धरूपावच्छेदकत्वावगाहिद्वित्वाभावप्रकारकप्रतीतिं प्रत्येव ग्राह्याभावावगाहितया प्रतिबन्धकतया तदुभयत्वेऽनतिरिक्तवृत्तित्वावगाहि द्वित्वाभावप्रकारकप्रतीत्युत्पत्तौ बाधकाभावात्, स्वातन्त्र्येण विरोधित्वकल्पनापेक्षया प्रत्येकस्मिन् द्वित्वाभावानभ्युपगमे एव लाघवात्।

नचैवमयं द्वौ इत्यपि प्रत्यक्षप्रतीतिः प्रमा स्यात्, एकव्यक्तावपि द्वित्वस्य पर्याप्तिसंबन्धेन सत्वादिति वाच्यम्। मूलावच्छिन्नो वृक्षः कपिसंयोगीत्यादि प्रतीतेर्मूलावच्छेद्यसमवायेन कपिसंयोगाद्यवगाहित्ववदुक्तप्रतीतेरपि इदन्त्वावच्छेद्यपर्याप्तिसंबन्धेनैव द्वित्वाद्यवगाहितया प्रमात्वायोगात्। एकव्यक्तेरिदन्त्वावच्छेद्यपर्याप्तिसंबन्धेन द्वित्वरहितत्वात्। अत एवाऽयं न द्वौ इत्यादिप्रतीतेः प्रमात्वमुपपद्यते इदन्त्वावच्छेद्यपर्याप्तिसंबन्धेन यो द्वित्वस्याभावः तद्वति तदवगाहित्वात्। नचेदन्त्वावच्छेद्यपर्याप्त्यप्रसिद्धिः। एकत्ववह्नित्वादौ तत्सौलभ्यात् एकत्वं वह्नित्वं चेदन्त्वावच्छिन्ने पर्याप्तम्, न तु द्वित्वादिकमित्यनुभवस्य सर्वसिद्धत्वात्।

## लक्ष्मीः

ननु एको न द्वौ इति प्रतीत्यन्यथानुपपत्त्या प्रत्येकं द्वित्वाभावाभ्युपगमस्यावश्यकत्वे तादृशाविरोधित्वकल्पनप्रयुक्तगौरवस्य प्रामाणिकत्वेन तदकल्पनप्रयुक्तलाघवमकिंचित्करमित्याशयेन शङ्कते **नचेति**। एवं। प्रत्येकस्मिन्नपि द्वित्वाभावानभ्युपगमे। **प्रमा स्यादिति**। पर्याप्तिसंबन्धेन द्वित्ववति प्रत्येकस्मिन् द्वित्वप्रकारकत्वादिति भावः।

**उक्तप्रतीतेः**। अयं द्वौ इति प्रतीतेः। **इदन्त्वावच्छेद्यपर्याप्तिसंबन्धेनैव**। एवकारेण शुद्धपर्याप्तेर्व्यवच्छेदः। शुद्धपर्याप्तिसंबन्धेन द्वित्वस्य एकव्यक्तौ सत्वात्। **अतएव** अयं द्वौ इति प्रत्ययस्य इदन्त्वावच्छेद्यपर्याप्तिसंबन्धेन द्वित्वावगाहित्वादेव। **तद्वति**। द्वित्वाभाववति। **तदवगाहित्वात्**। द्वित्वाभावप्रकारकत्वात्। नचाऽस्याः इदन्त्वे द्वित्वावच्छेदकत्वाभाव एव विषयोऽस्तु इति वाच्यम्। इदन्त्वावच्छेद्यपर्याप्तिसंबन्धेन द्वित्वाभावविषयकत्वे बाधकाभावात्। **प्रमा स्यादिति**। घटे एतद्गृहवृत्तित्वस्य द्वित्वस्य च सत्वादिति भावः। **भ्रमत्वादिति**। घटद्वयत्वावच्छेदेन गृहवृत्तित्वाभाववति घटे गृहवृत्तित्वावगाहित्वादित्यर्थः। **अत एव**। उक्तप्रतीतेर्घटद्वयत्वावच्छेदेन तद्गृहवृत्तित्वावगाहित्वादेव। तत्र। गृहादौ एकघटसत्वदशायां। **तन्निष्ठत्वाभावसंभवादिति**। गृहनिष्ठत्वाभावसंभवादित्यर्थः। तथा च घटद्वयत्वावच्छेदेन तादृशगृहवृत्तित्वाभाववति घटे तादृशगृहवृत्तित्वाभावप्रकारकत्वादिति भावः। ननु एकदेशवृत्ति-

न च घटत्वादौ घटपटोभयवृत्तित्वाभाव एवोक्तप्रतीतेर्विषयः। सामान्यघटयोर्न समवायेन घटत्वमित्यादौ सामान्यघटोभयसमवेतत्वाप्रसिद्ध्या तदभावस्य भानासंभवादिति संप्रदायविदः।

परेतु तदनतिरिक्तवृत्तित्वमत्र न तदभाववदवृत्तित्वम्, तथा सति हेतुमन्निष्ठा-

## लक्ष्मीः

पदार्थस्य व्यासज्यवृत्तिधर्मावच्छेदेनाऽभावोनाङ्गीक्रियते इत्यत आह। **प्रतियोगिमत्यपि**। घटत्ववत्यपि। **तदभावस्य**। घटत्वाभावस्य। घटपटौ घटत्वाभाववन्तौ इति घटपटोभयत्वावच्छेदेन घटत्वाभावावगाहितया व्यासज्यवृत्तिधर्मावच्छेदेन एकदेशवृत्तेर्धर्मस्याभावः स्वीकरणीय इति भावः। शङ्कते। **न चेति। घटपटोभयवृत्तित्वाभाव एवेति**। घटपटोभयनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाभाव एवेत्यर्थः। एवकारेण घटपटोभयत्वावच्छेदेन घटत्वाभावस्य व्यावृत्तिः। तथा च एकदेशवृत्तिधर्मस्य व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावस्वीकारे मानाभावः। समाधत्ते। **सामान्यघटयोरिति। तदभावस्य**। सामान्यघटोभयनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वाभावस्य। न च समवायसंबन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसंबन्धेन तदभाव एवोक्तप्रतीतिविषय इति वाच्यम्। विशेषरूपेण संसर्गतानभ्युपगमात्। **सम्प्रदायविद इत्यस्वरसः**। तद्बीजं तु प्रत्येकस्मिन् पर्याप्तिसंबन्धेन द्वित्वाभावानभ्युपगमे स्वसमानवृत्तिकत्वस्यावच्छेदकविशेषणत्वेपि वन्हित्वस्यावच्छेदकत्वं दुर्वारम्, प्रत्येकस्मिन् पर्याप्तद्वित्वादेरभावस्येव द्वित्वादिपर्याप्तेरप्यभावस्याऽसत्वेन द्वित्वादेरपि वन्हित्वपर्याप्त्यधिकरणपर्याप्तत्वरूपस्वसमानवृत्तिकत्वस्यानपायात्। न च प्रत्येकस्मिन् पर्याप्तिसंबन्धेन द्वित्वादेरभावस्यासत्वेपि द्वित्वपर्याप्तेरभावस्य सत्वाभ्युपगमान्न दोष इति वाच्यम्। तत्र तत्संबन्धस्याभावे तेन संबन्धेन संबन्धिनः सत्वाभ्युपगमस्याऽसंभवादिति।

**परेतु इति। तदभाववदवृत्तित्वमिति**। प्रतियोगितावच्छेदकाभाववदवृत्तित्वमित्यर्थः। **तथासति। तदभाववदवृत्तित्वस्वरूपत्वे**

भावप्रतियोगितावच्छेदकं यद्वन्हिधूमोभयत्वं प्रत्येकं तदभाववान् वन्हिधूमश्चेति तदुभयवृत्तित्वस्यैव वन्हिधूमोभयत्वे सत्वात्तादूप्येण साध्यतायां वन्ह्यादिहेतावतिव्याप्त्यापत्तेः। किन्तु तादृशप्रतियोगितावच्छेदकवती यावती व्यक्तिस्तद्भेदकूटवदवृत्तित्वमेव तथात्वं वक्तव्यम्, तथा च वन्हिमान् धूमादित्यत्राव्याप्तिरेव, तादृशप्रतियोगितावच्छेदकीभूतं तत्तार्णतार्णोभयत्वादिकं तद्वतो निखिलवन्हेः प्रत्येकभेदकूटवति वन्हित्वस्यावृत्तेरतः स्वसमानवृत्तिकत्व देयमेवेति वदन्ति। तत्तुच्छम्। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धूमत्वं तदभाववति पर्याप्तिसबन्धेन वन्हिधूमोभयत्वस्यावृत्तित्वादेव तादूप्येण साध्यतायां वन्हिहेतावतिव्याप्त्यभावाद् भेदकूटनिवेशस्य व्यर्थतापातादिति।

## लक्ष्मीः

सतिं। **तदभाववानिति**। प्रतियोगितावच्छेदकताघटकपर्याप्तिसंबन्धेन प्रतियोगितावच्छेदकाभाववानित्यर्थ। **तदुभयवृत्तित्वस्यैव**। वन्हिधूमोभयवृत्तित्वस्यैव। **तादूप्येण**। वन्हिधूमोभयत्वेन रूपेण। **तथात्वं**। अनतिरिक्तवृत्तित्वं। **वक्तव्यम्**। तथा च नातिव्याप्तिः तादृशप्रतियोगितावच्छेदकवन्हिधूमोभयत्ववद् वन्हिधूमव्यक्तिभेदकूटवति घटादौ वन्हिधूमोभयत्वस्यावृत्तित्वात्।

अत्र तादृशप्रतियोगितावच्छेदकधूमत्ववद्यत्किञ्चिद्धूमभिन्ने धूमान्तरे धूमत्वस्य वर्तमानत्वात्, एवं तादृशधूमत्ववत्तत्तद्धूमव्यक्तिभेदवति धूमान्तरे वर्तमानत्वाच्च धूमत्वस्येति धूमवान् वन्हेरित्यत्रातिव्याप्तिवारणाय यावत्वस्य भेदकूटस्य च निवेशः। **तथा च**। तादृशभेदकूटवदवृत्तित्वनिवेशे च। **स्वसमानवृत्तिकत्वं देयमेवेति**। तथा च स्वसमानवृत्तिकं यद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं तद्वती यावतीव्यक्तिस्तत्तद्भेदकूटवदवृत्तियत्त्वं तदन्येत्यादि। वन्हित्वसमानवृत्तिकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाप्रसिद्धया। स्वपदेनवन्हित्वस्योपादानाऽसंभवनान्नाव्याप्तिः, तार्णातार्णोभयत्वस्य स्वपदेन धर्त्तुं शक्यतया तदन्यत्वस्य वन्हित्वे सत्वात्। **तत्तुच्छमिति**। **तदभाववति**। धूमत्वाभाववति वन्हौ। **तादूप्येण**। वन्हिधूमोभयत्वेन रूपेण। **व्यर्थतापातादिति**। तथा च तार्णातार्णोभयत्वा-

केचित्तु तार्णातार्णोभयं नास्तीति प्रतीतौ प्रतियोगितावच्छेदकतानिर्वाहकः समवाय एव संबन्धो भासते न तु पर्याप्तिः। दण्डिपुरुषत्वाश्रयस्य सत्वेपि तदवच्छिन्नाभाववत्तादृशोभयत्वाश्रयस्य तार्णमात्रस्य सत्वेपि तादृशोभयत्वावच्छिन्नाभावो न विरुद्धः, तदवच्छिन्नाधिकरणतया सार्धमेव तस्य विरोधात्। एवं च यथाश्रुतमेव सम्यगित्याहुः तच्चिन्त्यम्।

वस्तुतस्तु समवायेन प्रमेयसाध्यके भावत्वादिहेतावतिव्याप्तिवारणार्थ-

---

लक्ष्मीः

भाववति प्रत्येकवन्हौ वर्तमानत्वाद्वन्हित्वस्येत्यव्याप्त्यभावात्स्वसमानवृत्तिकत्वं व्यर्थमेवेति भावः। **दण्डिपुरुषत्वाश्रयस्य**। दण्डोपलक्षितपुरुषत्वाश्रयस्य। **तदवच्छिन्नाभाववत्**। दण्डिपुरुषत्वावच्छिन्नाभाववत्। **तादृशेति**। तार्णातार्णेत्यर्थः। **सार्धमेवेति**। एवकारेण तदाश्रयाधिकरणत्वस्य व्यावृत्तिः। **तस्य**। तादृशोभयत्वावच्छिन्नाभावस्य। **एवं च**। समवायस्य तादृशोभयत्वनिर्वाहकत्वे च। **यथाश्रुतमेवसम्यगिति**। तथाचाऽसंभववारणाय स्वसमानवृत्तिकत्वं देयमिति भावः। **तद्वतोऽधिकरणे**। तादृशोभयत्वाश्रयाधिकरणे। **तदवच्छिन्नानधिकरणत्वस्य**। तादृशोभयत्वावच्छिन्नानधिकरणत्वस्य। **असंभवादिति**। तथा च समवायस्य प्रतियोगितावच्छेदकताघटकसंबन्धत्वे तार्णमात्रस्य सत्वेपि तार्णातार्णोभयं नास्तीति प्रतीत्यनुपपत्तेरिति भावः।

प्रतियोगितावच्छेदकावच्छिन्नाधिकरणतयैव सार्धं अभावस्य विरोधे प्रत्येकाधिकरणे द्वित्वावच्छिन्नाभाववत्प्रत्येकं द्वित्वाभावसत्वेपि बाधकाभावेन वन्हित्वादेः पारिभाषिकावच्छेदकत्वापत्तेरभावात्स्वसमानवृत्तिकत्वविशेषणं व्यर्थमेव स्यादित्यपि बोध्यम्।

**वस्तुतस्तु इति**। **अतिव्याप्तिवारणार्थमिति**। हेतुसमानाधिकरणो यः समवायेन प्रमेयाभाव स्तत्प्रतियोगितावच्छेदकप्रमेयत्वाभावाप्रसिद्ध्या साध्याभावस्य लक्षणाघटकतयाऽभावान्तरमादाय

मवश्यं प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यस्य हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदन्यूनवृत्ति तत्वमर्थो वाच्यः। तत्राऽन्यूनवृत्तित्वं न प्रतियोगितावच्छेदकताघटकसंबन्धेन वाच्यम्। वन्हिधूमोभयवान् वन्हेरित्यादावतिव्याप्तेः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वन्हिधूमोभयत्वं तस्य तादृश पर्याप्त्यधिकरण यद्वन्हिधूमोभय तत्प्रत्येकनिष्ठस्य पर्याप्तिसंबन्धावच्छिन्नाभावस्य प्रतियोगित्वसत्वेन न्हिधूमोभयत्वादिकं प्रतिन्यूनवृत्तित्वात्, किन्तु स्वावच्छिन्नप्रतियोगित्वसंबन्धेनैव तथात्वं वाच्यम्, तथा च वन्हिनिष्ठतार्णातार्णोभयत्वादेरपि स्वावच्छिन्नप्रतियोगित्वसंबन्धेन वन्हित्वादिकं प्रत्यन्यूनवृत्तित्वाद् वन्हिमान् धूमादित्यादौ वन्हित्वादेरवच्छेदकत्ववारणाय स्वसमानवृत्तिकत्वेनावच्छेदकं विशेषणीयमिति युक्तमुत्पश्यामः।

## लक्ष्मीः

प्रसक्ताया अतिव्याप्तेर्वारणार्थमित्यर्थः। **यदन्यूनवृत्तीति**। यद्व्यापकमित्यर्थः। **तत्त्वमिति**। पारिभाषिकावच्छेदकत्वमित्यर्थः। तथा च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मव्यापकं, स धर्मः पारिभाषिकावच्छेदक इत्यर्थः।

हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मवन्निष्ठभेदप्रतियोगितानवच्छेदकं स धर्मः पारिभाषिकावच्छेदकः इतिफलितम्।

अत्र व्याप्यत्वं व्यापकत्वं च यदि यत्किञ्चित्संबन्धेनोच्यते तदा वन्हिमान् धूमादित्यादावव्याप्तिः, घटत्वस्यापि वन्हित्वव्यापकत्वात् कालिकेन वन्हित्वाधिकरणे तद्व्यक्तौ कालिकेन तद्व्यक्त्यसमानव्यक्त्यभावस्य ग्राह्यतया तदप्रतियोगित्वस्य घटत्वे सत्वात्। सम्बन्धसामान्येनोक्तौ तु स एव दोषः। अतो व्याप्यत्वं साध्यतावच्छेदकताघटकसंबन्धेन व्यापकत्वं च प्रतियोगितावच्छेदकताघटकसंबन्धेन वाच्यम्। तदाऽऽह। **अत्राऽन्यूनवृत्तित्वमिति**। यद्धर्मवन्निष्ठभेदप्रतियोगितावच्छेदकता चेत्यर्थः। **न्यूनवृत्तित्वादिति**। तथा च यद्धर्मपदेन वन्हिधूमोभयत्वस्योपादातुमशक्यतया साध्याभावस्य लक्षणाघटकत्वादिति भावः। **तथात्वं**। व्यापकत्वं। तथा च प्रत्येकस्मिन् वन्हौ धूमे च स्वावच्छिन्नप्रतियोगित्वसंबन्धेनोभयत्वस्य वर्तमानतया तत्र वर्तमानस्य घटत्वाद्यभावस्य स्वावच्छिन्नप्रतियोगित्वसंबन्धा-

**घटकं चावच्छेदकत्वं स्वरूपसंबन्धविशेषः । एवं यद्धर्माव-च्छिन्नेत्यत्र यद्धर्मान्यूनवृत्तिधर्मावच्छिन्नेति वक्तव्यम् । तेनोक्ताऽ-व्याप्तिनिरासः ।**

---

ननु प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यत्र घटकं प्रतियोगितावच्छेदकत्वं यदि प्रतियोगितानतिरिक्तवृत्तित्वरूपं तदा तार्णातार्णोभयत्वावच्छिन्नाभावमादाय वन्हिमान धूमादित्यादौ वन्हित्वमपि पारिभाषिकावच्छेदकं स्यादत आह । घटक-मिति । प्रतियोगिता धर्मिकोभयाभावघटितलक्षणे गुरुरूपेण साध्यतायामव्याप्तिमपा-कर्तुमाह । एवञ्चेति । स्वसमानवृत्तिकत्वाविवक्षणे चेत्यर्थः । अन्यथा वन्हित्वान्यू-नवृत्तितार्णातार्णोभयत्वावच्छिन्नत्वस्य तादृशप्रतियोगितायां सत्वादसंभव एव स्यादिति भावः ।

---

वच्छिन्नप्रतियोगिताशून्यत्वस्य वन्हिधूमोभयत्वे सत्वाद्यद्धर्मपदेन तस्योपादानसंभवादिति ध्येयम् । **अवच्छेदकत्ववारणाय** । पारिभाषि-कावच्छेदकत्ववारणाय ।

अनुगमस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदक विशिष्टो यो धर्मः स पारिभाषिकावच्छेदकः ।

वै०आधेयतासं० । सा च स्वसमानाधिकरणभेदप्रतियोगितावच्छे-दकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्वसंब-न्धावच्छिन्ना । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकता च स्व-पर्याप्त्यनवच्छेदकीभूतव्यासज्यवृत्तिधर्मावच्छिन्नपर्याप्तिकान्यत्वसं० । स्वं-पारिभाषिकावच्छेदकत्वेनाभिमतम् । प्रथमसंबन्धघटकभेदप्रति-योगितावच्छेदकता च स्वावच्छिन्नप्रतियोगित्वसंबन्धावच्छिन्नेति ।

**प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमित्यत्रेति** । हेतुमन्नि-ष्ठाभावप्रतियोगितावच्छेदकाभाववदवृत्तित्वमित्यत्रेत्यर्थः । घटकमव-च्छेदकत्वं यदि प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वरूपं तदाऽनव-स्थास्यादत आह । **प्रतियोगितानतिरिक्तवृत्तित्वरूपमिति** । **पारि-भाषिकावच्छेदकं स्यादिति** । प्रतियोगितायाः अव्यासज्यवृत्तितया वन्हित्वस्य तादृशोभयाभावप्रतियोगित्वाभाववदवृत्तित्वादिति भावः । **दीधितौ** । **स्वरूपसंबन्धविशेष इति** । तथा च स्वरूपसंबन्धरूपा-

ननु धूमत्वमेकस्मिन्नेव धूमे पर्याप्तमित्यादि प्रतीतेः प्रत्येकवृत्तिधर्मावच्छिन्नाधिकरणताकत्वावगाहितयैवोपपत्तौ धूमत्वादेः पर्याप्तिसंबन्धे मानाभाव इति धूमवान् वन्हेरित्यादावतिव्याप्तिः, स्वपदेन धूमत्वस्य गृहीतुमशक्यत्वात्, एवं सत्तात्वस्य विशिष्टसत्तात्वानतिरिक्ततया सत्तादिसाध्यकजातिमत्त्वादिहेतावव्याप्तिश्चेत्यत आह । वस्तुतस्तु वति ।

---

वच्छेदकताश्रयसमनियतलघुधर्मानतिरिक्तवृत्तित्वमादायैव प्रमेयधूमत्वादेः पारिभाषिकावच्छेदकत्वमुपपादनीयमिति भावः । **प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे** । हेतुमन्निष्ठाभावप्रतियोगितायां यत्संबन्धावच्छिन्नत्व-यद्धर्मावच्छिन्नत्वोभयाभावस्तेनसंबन्धेन तद्धर्मावच्छिन्नसामानाधिकरण्यमिति लक्षणे । **गुरुरूपेण साध्यतायां** । प्रमेयवन्हिमान् धूमादित्यत्र । **अव्याप्तिं** । प्रमेयवन्हित्वावच्छिन्नत्वाप्रसिद्ध्याऽव्याप्तिं । **अपाकर्तुं** । निराकरणाय । **दीधितौ । एवं चेति ।** स्वसमानवृत्तिकत्वप्रवेशे चेत्यर्थः । यद्धर्मावच्छिन्नत्वेत्यस्य यद्धर्मान्यूनवृत्तिधर्मावच्छिन्नत्वेत्यर्थकरणेन । प्रमेयवन्हिमान् धूमादित्यत्र प्रमेयवन्हित्वान्यूनवृत्तिवन्हित्वावच्छिन्नत्वाभावमादाय लक्षणसमन्वयेपि स्वसमानवृत्तिकत्वमपि विशेषणीयम्, अन्यथा वन्हिमान् धूमादित्यादौ धूमसमानाधिकरणतार्णतार्णोभयाभावीयप्रतियोगितायां वन्हित्वान्यूनवृत्ति तार्णतार्णोभयत्वावच्छिन्नत्वस्य संयोगसंबन्धावच्छिन्नत्वस्य च सत्वादसंभव एव स्यादिति भावः । एवं च यद्धर्मावच्छिन्नत्वेत्यस्य यद्धर्मसमानवृत्तिको यद्धर्मान्यूनवृत्तिर्यो धर्मस्तदवच्छिन्नत्वेत्यर्थ इति भावः । **प्रत्येकवृत्तिधर्मावच्छिन्नाधिकरणताकत्वेति** । प्रत्येकधूमादिनिष्ठतत्तद्व्यक्तित्वावच्छिन्नाया धूमत्वनिरूपिताधिकरणतातत्कत्वावगाहितयेत्यर्थः । **स्वपदेन धूमत्वस्य गृहीतुमशक्यत्वादिति** । स्वपदग्राह्यवन्हिधूमोभयत्वसमानवृत्तिकवह्निमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्वह्निधूमोभयत्वं तदभाववदवृत्ति यत् स्वं वन्हिधूमोभयत्वं तदन्यत्वस्य साध्यतावच्छेदके सत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरिति भावः । अनुपपत्तिसंभवे आपत्तेरन्याय्यत्वादाह । **एवमिति । विशिष्टसत्तात्वानतिरिक्ततयेति** । सत्तात्वसमानवृत्तिकं हेतुमन्निष्ठाभावप्रतियोगि-

वस्तुतस्तु तदवच्छिन्नप्रतियोगिताकाभाववदसंबद्धस्वविशिष्ट-सामान्यकत्वम् ।

तदवच्छिन्नेति । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्नाभाववति असबद्ध यद्धर्मविशिष्टसामान्यं तदेव पारिभाषिकावच्छेदकमित्यर्थः ।

अत्र तदाश्रयप्रतियोगिताकाभावेत्युक्तौ तादृशधूमत्वाश्रयप्रतियोगिकोभयाभावादि-

## लक्ष्मीः

तावच्छेदकं यद्विशिष्टसत्तात्वं तदभाववदवृत्तितयेत्यर्थः । अव्याप्तिश्चेति । तादृशविशिष्टसत्तात्वाभाववदवृत्तियत्त्वं तदन्यत्वविरहादिति भावः ।

इत्यर्थ इति । तथा च तदवच्छिन्नेत्यत्र तत्पदं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतस्वरूपसंबन्धरूपावच्छेदकपरम् । वह्निसमानाधिकरणाभावप्रतियोगितायाः स्वरूपसंबन्धरूपं यदवच्छेदकं धूमत्वं तदवच्छिन्नाभाववति प्रमेयधूमत्वविशिष्टसामान्यस्य असम्बद्धत्वान्नातिव्याप्तिः। स्वपदमनतिरिक्तवृत्तित्वेनाभिमतपरम् । अथ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति असंबद्धं यद्धर्मविशिष्टसामान्यं तदेव पारिभाषिकावच्छेदकमित्युक्तौ वह्निमान् धूमादित्यादावव्याप्तिः, हेतुसमानाधिकरणमहानसीयवन्ह्यभावप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नाभाववति वह्नित्वविशिष्टसमान्यस्याऽसंबद्धत्वादिति चेन्न । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपवृतिप्रतियोगिताकाभाववति असंबद्धत्वस्य विवक्षितत्वात् । रूपवृत्तित्वं च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसं० ।

अथ यत्किञ्चिद्धेत्वधिकरणे साध्यतावच्छेदकसंबन्धेनासंबद्धं यद्धर्मविशिष्टसामान्यं तदन्यसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्योक्तावपि न दोष इति चेन्न । संयोगी गुणकर्मान्यत्वादित्यादावतिव्याप्तेः । हेत्वधिकरणे सामान्यादौ समवायेन संबद्धत्वाप्रसिद्धेः, द्रव्ये च संयोगत्वविशिष्टस्य संबद्धत्वात् ।

अत्र लक्षणे । तदाश्रयप्रतियोगिताकाभावेत्युक्तौ । हेतुमन्नि-

मति प्रमेयधूमत्वविशिष्टस्य संवद्धतयाऽवच्छेदकत्व न स्यात् किन्तु गगनत्वादेरेव तथात्व स्यादत उक्तम्। तदवच्छिन्नेति।

प्रतियोगित्वं च साध्यतावच्छेदकसंबन्धेन ग्राह्यम्। तेन अय घट एतत्त्वादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं पटत्वं संबन्धसामान्येन कालिकसंबन्धेन वा तदवच्छिन्नाभाववति नित्यगुणगगनादौ घटत्वत्वविशिष्टस्याऽसंबद्धत्वेपि नाव्याप्तिः।

पर्वतादेरुत्पत्तिकालावच्छेदेन संयोगसंबन्धावच्छिन्नधूमाभाववत्वात्, तत्र च

## लक्ष्मीः

ष्ठाभावप्रतियोगितावच्छेदकाश्रयप्रतियोगिकाभावेत्युक्तौ। **तादृशधूमधूमत्वाश्रयप्रतियोगिकोभयाभावादिमति।** हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूतधूमत्वाश्रयप्रतियोगिको यो धूमघटोभयाभावस्तद्वति। तादृशधूमत्वाश्रयमहानसीयधूमाभाववतीत्यपि बोध्यम्। **गगनत्वादेरेवेति।** गगनत्वविशिष्टस्य कुत्राप्यधिकरणेऽसंबद्धत्वेन धूमघटोभयाभावादिमति असंबद्धत्वात्। **तथात्वं स्यादिति।** पारिभाषिकावच्छेदकत्वं स्यादित्यर्थः।

**प्रतियोगित्वं चेति।** तादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगित्वं चेत्यर्थः। **साध्यतावच्छेदकसंबन्धेनेति।** साध्यतावच्छेदकसंबन्धावच्छिन्नमित्यर्थः **तेन।** हेतुमन्निष्ठाभावीयप्रतियोगितावच्छेदकावच्छिन्नाभावीय प्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशेन। **तदवच्छिन्नाभाववति।** पटत्वावच्छिन्नाभाववति। **नाव्याप्तिरिति।** समवायेन पटत्वावच्छिन्नाभाववति घटे घटत्वत्वविशिस्य संबद्धत्वादिति भावः। गगनादौ संयोगेन वह्नित्वविशिष्टस्य वन्ह्यवयवे "परमाणौ च" संयोगेन वन्ह्यन्तरस्य संबद्धत्वादव्याप्तिविरहात्स्थलान्तरानुधावनम्। **धूमाभाववत्त्वादिति।** वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधूमत्वावच्छिन्नस्य संयोगेनाऽभाववत्वादित्यर्थः। **तत्र।** पर्वतादौ। **तदसंबद्धेति।** पर्वताद्यसंबद्धेत्यर्थः। **स्वविशिष्टसामान्यकं।** गगनत्वविशिष्टसामान्यकं। **प्रतियोगितावच्छेदकसंबन्धेनेति।** स्वप्रतियोगितावच्छेदकसंबन्धेनेत्यर्थः।

धूमत्वविशिष्टस्य संबद्धत्वात्तदसंबद्धस्वविशिष्टसामान्यकं गगनत्वादिकमुपादाय धूमवान् वह्वेरित्यादावतिव्याप्तिरतः प्रतियोगिव्यधिकरणत्वेन तदवच्छिन्नाभावो विशेष्यः।

प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नाऽसंबन्धी तदवच्छिन्नाभाववान् ग्राह्य इति तु पर्यवसितार्थः।

---

## ( लक्ष्मीः )

तथा च तादृशधूमत्वावच्छिन्नाऽसंबन्धी अथ च धूमत्वावच्छिन्नाभाववानयोगोलकादिरेवेति नातिव्याप्तिः। **पर्यवसितार्थ इति।** ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाऽसंबन्धिनि असंबद्धं यद्धर्मविशिष्टसामान्यमित्यनेनैव सामञ्जस्ये तदवच्छिन्नाभाववानिति विशेषणं व्यर्थमिति चेत्तदवच्छिन्नाभाववानित्यस्य तादृशार्थे एव तात्पर्यादिति। वस्तुतः अभावश्च प्रतियोगिव्यधिकरणोबोध्य इति ग्रन्थाऽसंगतिः। प्रतियोगिवैयधिकरण्यस्याधुना लक्षणेऽ प्रवेशात्। वस्तुतो नाप्यनतिरिक्तवृत्तित्वमित्यादिना प्रतियोगितायाः स्वरूपसंबन्धरूपावच्छेदकत्वं परित्यज्य प्रतियोगिताया अनतिरिक्तवृत्तित्वनिवेशः। ततः प्रतियोगितायाः प्रतियोगितावच्छेदकस्वरूपतया प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वरूपप्रतियोगितानतिरिक्तवृत्तित्वनिवेशः। प्रतियोगितायाः प्रतियोगिस्वरूपत्वेन तदवच्छिन्नाभाववदसंबद्धमित्यादिना प्रतियोगितानतिरिक्तवृत्तित्वनिवेशः। परन्तु प्रतियोगितावच्छेदकावच्छिन्नाऽसंबन्ध्यवृत्तिरूपानतिरिक्तवृत्तित्वनिवेशेऽनतिरिक्तवृत्तित्वस्य पारिभाषिकत्वापत्तेः। एतेन हेत्वधिकरणेऽसंबद्धं यद्धर्मविशिष्टसामान्यं तत्पारिभाषिकावच्छेदकमित्यपि निरस्तम्। **प्रतियोगितावच्छेदकावच्छिन्नाऽसंबन्धीति।** तादृशप्रतियोगितावच्छेदकावच्छिन्नाऽसंबन्धीत्यर्थः। तादृशपदं चात्र स्वरूपसंबन्धरूपावच्छेदकतानिरूपकप्रतियोगितापरम्। एतेन प्रतियोगितावच्छेदकावच्छिन्नाऽसंबन्धीत्यनेन प्रतियोगितावच्छेदकावच्छिन्नयत्किञ्चित्प्रतियोग्यसंबन्धित्वम्, तादृशप्रतियोगिसामान्यासंबन्धित्वम्, यत्किञ्चित्प्रतियोगितावच्छेदकावच्छिन्नासंबन्धित्वं वा विवक्षितम्। नाद्यः—धूमवान् वान्हेरित्यादावतिव्याप्तेः, पर्वतादिवृत्तिधूमाभावस्यापिप्रतियोगिव्यधिकरणत्वात्,

तेन संयोगसंबन्धावच्छिन्नधूमाभावस्य धूमवत्पर्वतादौ समवायादिसंबन्धेन प्रतियोगिव्यधिकरणत्वेपि धूमत्वस्य नावच्छेदकत्वहानिः ।

## लक्ष्मीः

धूमत्वावच्छिन्नमहानसीयधूमासंबन्धित्वादुत्पत्तिकालावच्छेदेन धूमाभाववत्वाच्च पर्वतस्य । न द्वितीयः–वन्ह्यभाववान् धूमाभावादित्यादावतिव्याप्तेः, सर्वस्यैवाभावस्यपूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्येन सिद्धान्तलक्षणोक्तरीत्या गगनाभावस्यैव प्रतियोगिव्यधिकरणत्वेन तद्वति वन्ह्यभावत्वादिसंबद्धतया वन्ह्यभावत्वादेरवच्छेदकत्वासंभवात् । न तृतीयः—पर्वतादिवृत्तिधूमाभावस्योभयाभावघटितपर्वतवृत्तिविशिष्टस्वाभावत्वरूपप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्याक्रान्ततया धूमत्वादेरनवच्छेदकत्वं दुर्वारमिति निरस्तम् । तत्प्रतियोगितावच्छेदकधूमत्वावच्छिन्नवैयधिकरण्यस्यायोगोलोकवृत्तिधूमाभावनिष्ठस्य पर्वतादिवृत्तिधूमाभावेऽसत्वात् ।

वन्ह्यभावाभावत्वादेस्तत्प्रतियोगितावच्छेदकवन्ह्यभावत्वावच्छिन्नव्यधिकरणत्वाच्च । एवमपि अयोगोलकादिवृत्तेरेवधूमाभावस्य पर्वतादिवृत्तितया कथं धूमत्वादेरवच्छेदकत्वोपपत्तिरिति चिन्तनीयम् ।

प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धित्वविवक्षायाः फलमाह । **तेन** । प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगिवैयधिकरण्यविवक्षणेन । **संयोगसंबन्धावच्छिन्नधूमाभावस्येति** । वन्हिमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधूमत्वावच्छिन्नाभावस्येत्यर्थः । **धूमत्वस्य नावच्छेदकत्वहानिरिति** । न धूमवान् वन्हेरित्यादावतिव्याप्तिरिति भावः । यत्किञ्चित्संबन्धेन प्रतियोगिवैयधिकरण्यनिवेशाभिप्रायेणेदम् । संबन्धसामान्येन विवक्षणे तु संबन्धसामान्यान्तर्गतसंयोगेन धूमाधिकरणत्वस्य पर्वतादौ सत्वेन संबन्धसामान्येन प्रतियोगिव्यधिकरणतदभाववत्वं न पर्वतादेरित्यतिव्याप्तिविरहेपि घटत्ववान् घटरूपादित्यादावव्याप्तिः, घटरूपसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नस्यानधिकरणे गगनादौ घटत्वत्वविशिष्टस्याऽसंबद्धत्वात् । गगने संयोगेन वन्हेः संबद्धत्वाद्वन्हिमान् धूमादित्युपेक्षितम् ।

न वा द्रव्य घटत्वादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदक यद्‌घटभिन्नद्रव्यत्ववत्वं प्रतियोग्यनधिकरणे तद वच्छिन्नाभाववति गुणादौ द्रव्यत्वत्वविशिष्टस्याऽसत्वेपि अव्याप्तिः।

वस्तुतो निरुक्तप्रतियोग्यनधिकरणत्वमेव तदवच्छिन्नाभाववतः साध्यताव-च्छेदकसवन्धेन वाच्यम्, न तु प्रतियोगितायां साध्यतावच्छेदकसबन्धा-वच्छिन्नत्व, वृत्त्यनियामकसम्बन्धेन साध्यतायां तत्सवन्धावच्छिन्नप्रतियोगि-त्वाप्रसिद्धया अव्याप्तिप्रसगादिति ध्येयम्।

## लक्ष्मीः

प्रतियोगितावच्छेदकावच्छिन्नेत्यस्य प्रयोजनमाह। **न वेति। प्रतियोग्यनधिकरणे।** तादृशद्रव्यत्वत्वावच्छिन्नाभावीयप्रतियोगि-त्वाश्रयशुद्धद्रव्यत्वासंबन्धिनि। **तदवच्छिन्नाभाववति।** तादृशद्रव्य-त्वत्वावच्छिन्नाभाववति। **न वाऽव्याप्तिः।** तादृशप्रतियोगिताव-च्छेदकघटभेदविशिष्टद्रव्यत्वत्वावच्छिन्नासंबधिनि घटे द्रव्यत्वत्ववि-शिष्टस्य संबद्धत्वात्।

न च घटभिन्नद्रव्यत्वत्वस्याऽसंबद्धत्वेपि तदन्यत्वस्य द्रव्यत्वत्वे विरहात्तद्दोषतादवस्थ्यमिति वाच्यम्। असंबद्धं यद्धर्मसामान्यं तदन्य-त्वेत्यनेनाऽसंबद्धधर्मावच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वस्य विवक्षणीयत्वादित्यग्रे व्यक्तीभविष्यति। **वस्तुत इति। तदवच्छिन्ना-भाववतः।** तादृशप्रतियोगितावच्छेदकावच्छिन्नाभाववतः। **निष्ठत्वं** षष्ठ्यर्थः। प्रतियोगितावच्छेदकाभाववन्निष्टप्रतियोग्यनधिकरणत्वमेवे-त्यर्थः तादृशप्रतियोगितावच्छेदकावच्छिन्नाऽसंबन्धित्वमेवेतियावत्। एवकारव्यवच्छेद्यमाह। **नत्विति। वृत्त्यनियामकसंबन्धेन।** स्वामि-त्वसंबन्धेन। **साध्यतायामिति।** धनादेः साध्यतायामित्यर्थः। धनी चैत्रत्वादित्यादौ इति यावत्। **तत्संबन्धावच्छिन्नप्रतियोगित्वाप्रसि-द्धया।** स्वामित्वसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धया। **अव्याप्तिप्र-संगादिति।** तथा च साध्यतावच्छेदकसंबन्धेन तादृशप्रतियोगिता-वच्छेदकावच्छिन्नासंबन्धीयस्तदवच्छिन्नाभाववान् तत्राऽसंबद्धं यद्धर्म-

न च घटवान् महाकालत्वादित्यादौ तादृशप्रतियोगितावच्छेदकं यद् गगनत्वं तदवच्छिन्नाभावस्य प्रतियोगिवैयधिकरण्याप्रसिद्ध्याऽव्याप्तिरिति वाच्यम्। अत्रापि साध्यतावच्छेदकसबन्धसामान्ये तादृशधर्मावच्छिन्नप्रतियोगिकत्व यद्यदनुयोगिकत्वोभयाभावस्तदसंबद्धत्वस्य विवक्षितत्वात्।

## लक्ष्मीः

विशिष्टसामान्यमित्युक्तौ तादृशप्रतियोगितावच्छेदकघटत्वावच्छिन्नाभाववतिचैत्रे स्वामित्वसंबन्धेन घटत्वावच्छिन्नाऽसंबन्धित्वस्य प्रसिद्धत्वात् चैत्रे घटत्वविशिष्टस्याऽसंबद्धत्वान्नाव्याप्तिरिति भावः।

शंकते। **नचेति**। **तादृशप्रतियोगितावच्छेदकमिति**। साध्यतावच्छेदकसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तादृशप्रतियोगितावच्छेदकमित्यर्थः। **प्रतियोगिवैयधिकरण्याप्रसिद्ध्येति**। तदवच्छिन्नासंबन्धित्वस्वरूपप्रतियोगिवैयधिकरण्याप्रसिद्धेत्यर्थः। **अव्याप्तिरिति**। **गगनत्वावच्छिन्नस्याधिकरणत्वाप्रसिद्ध्या** गगत्वावच्छिन्नाभाववति गगनत्वावच्छिन्नासंबन्धित्वरूपप्रतियोगिवैयधिकरण्याप्रसिद्धेरिति भावः। समाधत्ते। **अत्रापीति**। पूर्ववदेतन्निरुक्तावपीत्यर्थः। **तादृशधर्मावच्छिन्नप्रतियोगिकत्वेति**। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वेत्यर्थः।

तथा च साध्यतावच्छेदकसंबन्धसामान्ये यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व हेत्वधिरणीभूतयत्किञ्चिद्व्यक्त्यनुयोगिकत्व सामान्योभयाभावः साध्यतावच्छेदकसंबन्धसामान्ये एव तादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्व यद्यदनुयोगिकत्वोभयाभावस्तदसंबद्धत्त्वमित्यादि। तथा च कालिकसंबन्धे यद्यत्पदग्राह्य महाकालानुयोगिकत्वसत्वेपि तादृशप्रतियोगितावच्छेदकीभूतगगनत्वावच्छिन्नप्रतियोगिकत्वविरहेण यद्यत्पग्राह्य महाकाले गगनत्वविशिष्टस्याऽसंबद्धत्वाल्लक्षणसमन्वयः। अत्र यद्यदिति वीप्साननुधावने संयोगसंबन्धे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतघटत्वावच्छिन्नप्रतियोगिकत्व घटानुयोगिकत्वोभयाभावसत्वात्तादृशघटे वह्नित्वविशिष्टस्यासंबद्धत्वाद्वह्निमान् धूमादित्यादावव्याप्तिः। वीप्सादरे तु

## लक्ष्मीः

पर्वतव्यक्तेरपि यद्यद्न्तर्गतत्वेन तदसंबद्धत्वस्य वह्नित्वविशिष्टे विरहान्नाव्याप्तिः ।

ननु-यद्यद्व्यक्तिमध्ये जातिव्यक्तेरपि धारणात्तन्निरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाप्रसिद्ध्या वह्निमान् धूमादित्यत्राव्याप्तिरिति चेन्न अग्रे सत्तावान् भावत्वादित्यादावेतत्कल्पेऽतिव्याप्तेरुक्ततया वह्निमान् धूमादित्यादावपि अव्याप्तिरिष्यत एव । न चाऽव्याप्ति संभवेऽतिव्याप्तिदानं सन्दर्भविरुद्धमिति वाच्यम् । यादृशसत्तासाध्यकस्थलेऽव्याप्तिवारणायैतत्कल्पः स्वीकृतः तत्साध्यकस्थले एव व्यभिचारिणि अतिव्याप्तिरुक्ता जगदीशेनेति ध्येयम् ।

वस्तुतस्तु यद्यदिति वीप्सादरेण सामान्याभावनिवेशः सूचितः ।

सामान्याभावनिवेशश्च साध्यतावच्छेदकसंबन्धवृत्तिभेदप्रतियोगितावच्छेदकत्वाभाववदुभयाभावीय प्रतियोगितानिरूपितपरंपरीयानुयोगित्वनिष्ठावच्छेदकतानिरूपितावच्छेदकतावन्निरूपितवृत्तित्वाभावस्य यद्धर्मविशिष्टसामान्ये विवक्षितत्त्वात् । तथा च परंपरीयानुयोगित्वन्निष्ठावच्छेदकतानिरूपितावच्छेदकतावत्सामान्यादि"निरूपितसंयोग - संबन्धावच्छिन्नवृत्तित्वाप्रसिद्धावपि तादृशावच्छेदकतावत्पर्वतादिव्यक्तिनिरूपितवृत्तित्वाभावस्य गगनत्वविशिष्टसामान्ये सत्वाद् गगनत्वादिकमेव पारिभाषिकावच्छेदकमिति नाव्याप्तिरिति ।

अथात्र यद्यद्व्यक्त्यनुयोगिकसाध्यतावच्छेदकसंबन्धसामान्ये हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वा - भावस्तदसंबद्धत्वमेव विवक्ष्यतां किमुभयाभावनिवेशेनेति चेन्न द्रव्यवान् वाच्यत्वादित्यादौ संयोगेन साध्यतायामतिव्याप्तिः, तत्र घटस्योपादानं न संभवति तदनुयोगिकसंयोगे द्रव्यत्वावच्छिन्नप्रतियोगिकत्वसत्वात्, गगनानुयोगिकसंयोगाऽप्रसिद्ध्या गगनादेरपि नोपादानसंभवः । अतः साध्याभावस्य लक्षणाऽघटकत्वात्घटाभावमादायाऽतिव्याप्तिवारणायोभयाभाव निवेशः । तथा च संयोगे द्रव्यत्वावच्छिन्नप्रतियोगित्वगुणानुयोगिकत्वोभयाभावसत्वाद्यद्व्यक्तिपदेन गुणव्यक्तेरपि धारणात्तदसंबद्धत्वस्य द्रव्यत्वविशिष्टसामान्ये सत्वान्नातिव्याप्तिः । वस्तुतस्तु गुणादिनिरूपितसाध्यतावच्छेदकसंबन्धावच्छिन्नवृत्तित्वाप्रसिध्यैव नातिव्याप्तिः ।

तदसंबद्धत्वमपि साध्यतावच्छेदकसंबन्धेन सवद्धत्वसामान्याभावो बोध्यः ।

## लक्ष्मीः

अथ साध्यतावच्छेदकसंबन्धसामान्ये यद्यदनुयोगिकत्व-विशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधर्मावच्छिन्नप्रतियोगि-कत्वाभावस्तत्तद्व्यक्त्यसंबद्धत्वस्य यद्धर्मविशिष्टसामान्ये विव-क्षणेनैव सामञ्जस्ये किमुभयाभावनिवेशेन । वै० सामानाधिक-रण्यसं० । न च कालोघटवान् महाकालत्वादित्यत्र महाकालानुयोगि-कत्वविशिष्टगगनप्रतियोगिकत्वाऽप्रसिद्ध्याऽ व्याप्तिरिति वाच्यम् । तत्र महाकालाभावमादाय लक्षणसमन्वयात् महाकालानुयो-गिकत्वविशिष्टमहाकालप्रतियोगिकत्वस्य तादात्म्ये प्रसिद्धत्वा-दिति चेन्न । यत्र कालिकतादात्म्यान्यतरसंबन्धेन घटस्य साध्यता महाकालत्वस्य हेतुता तत्राव्याप्तिः, तत्र महाकालाभावस्य लक्षणाघट-कत्वात् । न च गगनाभावमादायैव नाव्याप्तिः, तथा हि—घटानुयोगि-कत्वविशिष्टगगनप्रतियोगिकत्वस्य संयोगादौ प्रसिद्धस्य साध्यताव-च्छेदकसंबन्धसामान्येऽसत्वात्, यत्पदेन घटस्य धारणसंभवात्, तदसंबद्धत्वस्य गगनत्वविशिष्टसामान्ये सत्वादिति वाच्यम् । यत्र संयोगकालिकतादात्म्यान्यतमसंबन्धेन घटस्य साध्यता महाकालत्वस्य हेतुता तत्र घटानुयोगिकत्वविशिष्टगगनप्रतियोगिकत्वाभावस्य साध्य-तावच्छेदकसंबन्धत्वाव्यापकत्वात् । उभयाभावनिवेशे गगनाभाव-मादाय लक्षणसमन्वयः । महाकालानुयोगिकत्व, गगनप्रतियोगिकत्वो-भयाभावस्य साध्यतावच्छेदकसंबन्धत्वव्यापकत्वात् ।

अथ साध्यतावच्छेदकसंबन्धसामान्ये हेतुसमानाधिकरणाभाव-प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिकत्व हेत्वधिकरणीभूत-यत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावस्तदसंबद्धत्वं यद्धर्मविशिष्टे विव-क्ष्यतां यद्व्यक्त्यनुधावनं व्यर्थमिति चेन्न । तस्यापि लक्षणान्तरत्वा-दिति ध्येयम् ।

**तदसंबद्धत्वमपीति** । प्रतियोगितावच्छेदकाऽवच्छिन्नाऽसंबन्धी यः प्रतियोगिव्यधिकरणहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदका-वच्छिन्नाभावसंबन्धी तन्निरूपितवृत्तित्वाभावोपीत्यर्थः । **साध्यता-वच्छेदकसंबन्धेनेति** । अवच्छिन्नत्वं तृतीयार्थः । अन्वयश्चास्य वृत्ति-

तेन घटत्वाद्यवच्छिन्नाभाववति घटत्वगगनत्वविशिष्टस्यापि यथा कथं चित्ता-दात्म्यादिना संबद्धतया न पारिभाषिकावच्छेदकाऽप्रसिद्धिनिबन्धनो व्याप्ति-लक्षणाऽसंभवः ।

न वा तादृशप्रतियोगितावच्छेदकीभूतमहानसीयवन्हित्वावच्छिन्नाभाववति जलादौ वन्हित्वविशिष्टस्याऽसंबद्धत्वाद् वन्हिमान धूमादित्यादावव्याप्तिः ।

धूमवन्निष्ठाभावप्रतियोगितावच्छेदकीभूततत्तद्वन्हित्वावच्छिन्नाभाववति वन्हित्व-विशिष्टस्य तत्तद्वन्हेरसंबद्धत्वाद्वन्हिमान् धूमादित्यादौ वन्हित्वमप्यवच्छेदकं स्यादतः सामान्यपदम् ।

---

तायां । साध्यतावच्छेदकसंबन्धेन संबद्धत्व (वृत्तित्व) विवक्षायाः फल-माह—तेनेति । साध्यतावच्छेदकसंबन्धेन तदवच्छिन्नाभाववन्निरूपित-संबद्धत्वस्य निवेशे चेत्यर्थः । **घटत्वावच्छिन्नाभाववति** । पर्वतगग-नादौ **यथा कथंचित्तादात्म्यादिना । संबद्धतयेति,** पर्वते कालिकेन घटत्वविशिष्टस्य-गगने च तादात्म्येन गगनत्वविशिष्टस्य संबद्ध-तयेत्यर्थः । **न व्याप्तिलक्षणाऽसंभव इति** । पर्वते घटत्वविशिष्टस्य संयोगेनाऽसंबद्धत्वादिति भावः । संबद्धत्वसामान्याभाव इत्यत्र सामान्यपदस्य प्रयोजनमाह—**नवेति । वह्नित्वविशिष्टस्याऽसत्वा-दिति** । तादृशप्रतियोगितावच्छेदकीभूतमहानसीनवह्नित्वावच्छि-न्नाभाववज्जलसंबद्धत्वं नास्तीत्यभावस्य वन्हित्वविशिष्टे सत्वादित्यर्थः । **अव्याप्तिरिति** । तादृश प्रतियोगितावच्छेदकीभूतमहानसीयवन्हित्वा-वच्छिन्नाभाववत्संबद्धत्वं नास्तीत्यभावस्य वन्हित्वविशिष्टेऽसत्वान्न तस्य पारिभाषिकावच्छेदकत्वमिति भावः । केवलान्वयिनि लक्षण-सत्वादाह । **अव्याप्तिरिति** । स्वविशिष्टसामान्यमित्यत्र सामान्यपदस्य प्रयोजनमाह । **धूमवन्निष्ठाभावेति** । धूमवन्निष्ठाभावप्रतियोगिता-वच्छेदकीभूततत्तद्वन्हित्वावच्छिन्नाभाववत्संबद्धत्वसामान्याभावस्य वन्हित्वविशिष्टतत्तद्वन्हौ सत्वादतः सामान्यपदमिति भावः ।

हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नासंबन्धितदवच्छिन्ना-भाववत्संबद्धत्वसामान्याभाववद्यद्धर्मविशिष्टसामान्यं स धर्मः पारि-भाषिकावच्छेदक इति निरुक्तौ यद्धर्म वै० केन संबन्धेनेति पृच्छति ।

ननु कालिकादिसंबन्धेन गगनत्वविशिष्टं घटादि तस्य तादृशप्रतियोगितावच्छेदकीभूतगगनत्वाद्यवच्छिन्नाभाववति । साध्यताघटकसयोगादिसंबन्धेन संबद्धत्वात्पारिभाषिकावच्छेदकाप्रसिद्धयाव्याप्तिलक्षणाऽसंभवः ।

न च साध्यतावच्छेदकताघटकसंबन्धेन स्ववैशिष्ट्याभिधानान्नैष दोषः । पुरुषनिष्ठसंयोगसंबन्धेन दण्डवतः कालिकविशेषणतया साध्यतायां महाकालत्वहेतावव्याप्त्यापत्तेः गगनत्वादेः पुरुषनिष्ठसंयोगसंबन्धेनाऽवृत्त्या पारिभाषिकावच्छेदकाप्रसिद्धेः ।

---

## लक्ष्मीः

**नन्विति । तस्य ।** घटादेः । आदिनावन्हेः परिग्रहः । **तादृशेति ।** हेतुमन्निष्ठाभावेत्यर्थः । प्रतियोगितावच्छेदकीभूतगगनत्वावच्छिन्नाभाववति पर्वतादौ कालिकेन गगनत्वादिविशिष्टवन्हेः संबद्धतया कस्यापि पारिभाषिकावच्छेदकत्वासंभवात्पारिभाषिकाऽप्रसिद्ध्या इति भावः । **न चेति ।** अस्य नैष दोष इत्यनेनान्वयः । **स्ववैशिट्याभिधानादिति ।** यद्धर्मवैशिष्ट्याभिधानादित्यर्थः । **नैष दोष इति ।** तथा च वन्हिमान् धूमादित्यादौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नाभाववति पर्वतादौ समवायेन घटत्वविशिष्टस्याऽसंबद्धत्वान्न पारिभाषिकावच्छेदकाऽप्रसिद्धिरिति भावः । साध्यतावच्छेदकताघटकसंबन्धेन स्ववैशिष्ट्याभिधानेऽसंभववारणेपि अव्याप्तिमाह । **पुरुषनिष्ठसंयोगसंबन्धेनेति ।** पुरुषानुयोगिकसंबन्धेनेत्यर्थः । **महाकालत्वहेतौ ।** दण्डिमान् महाकालत्वादित्यत्र । अव्याप्तिप्रकारमाह । **गगनत्वादेरिति ।** हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूत गगनत्वादेरित्यर्थः । तादृशगगनत्वावच्छिन्नाभाववति महाकाले पुरुषानुयोगिकसंयोगसंबन्धेन दण्डविशिष्टस्य कालिकेन संबद्धतया गगनत्वादेस्तु तादृशसंबन्धेन वैशिष्ट्याप्रसिद्धया यद्धर्मपदेन धर्त्तुमशक्यतया तस्यापि पारिभाषिकावच्छेदकत्वासंभवेन तदप्रसिद्धेरिति भावः । न च समवायेन गगनत्ववैशिष्ट्याप्रसिद्धयाऽव्याप्तिसंभवे स्थलान्तरानुधावनं किमर्थमितिवाच्यम् । तादृशगगनत्वावच्छिन्नाभाववति महाकाले समवायेन शब्दविशिष्टगगनस्याऽसंबद्धतया शब्दे पारिभाषिकावच्छेदकत्वप्रसिद्धेः । समवायस्यैक्यपक्षे

न च हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वं यादृशसंबन्धावच्छिन्नं तेनैव संबन्धेन स्ववैशिष्ट्याभिधानाद् घटत्वगगनत्वादौ पारिभाषिकावच्छेदकत्वं सुलभमिति वाच्यम् ।

## लक्ष्मीः

घटत्वप्रतियोगिकसमवायेन घटत्वविशिष्टस्य कालिकेन साध्यत्वोपेक्षा बोध्या ।

अथ केवलसंयोगेन दण्डविशिष्टस्य कालिकेन साध्यत्वेऽप्यव्याप्तिसंभवे पुरुषनिष्ठत्वोपादानं किमर्थम्, गगनत्वादेः संयोगेनापि वैशिष्ट्याप्रसिद्धेरितिचेन्न । यादृशरूपवृत्तिनिरूपकताकाधिकरणतासामान्यं हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति असंबद्धं तादृशरूपभिन्नरूपावच्छिन्नसामानाधिकरण्यमवश्यं वाच्यम्, अन्यथा समवायेनशिष्टसत्तावतस्तादात्म्येन साध्यतायां सत्वादेर्हेतुतायां हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति गुणे विशिष्टसत्ताश्रयस्य गुणस्य तादात्म्येन संबद्धतयाऽतिव्याप्त्यापत्तेः । तथा च तादृशप्रतियोगितावच्छेदकावच्छिन्नाभाववति गुणादौ विशिष्टसत्वस्य सत्तानतिरिक्ततया तद्धर्मविशिष्टस्य संबद्धत्वेऽपि विशिष्टसत्तात्वावच्छिन्ननिरूपकताकाधिकरणताविशिष्टस्य "द्रव्यस्य" असंबद्धतया विशिष्टसत्तायाः पारिभाषिकावच्छेदकत्वान्नातिव्याप्तिः । एवं चोक्तस्थले हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति महाकाले गगनवृत्तित्ववैशिष्ट्यघटत्वगतद्वित्ववृत्ति र्या साध्यतावच्छेदकतावच्छेदकसंयोगसंबन्धावच्छिन्नागगनवृत्तित्वविशिष्टघटत्वावच्छिन्ननिरूपकताकाधिकरणतावद्गगनस्य असंबद्धतया तद्धर्मभिन्नत्वस्य साध्यतावच्छेदके सत्वादव्याप्तिविरहात् । पुरुषानुयोगिकत्वनिवेशे तु पुरुषानुयोगिकसंयोगसंबन्धावच्छिन्नगगनवृत्तित्वविशिष्टघटत्वावच्छिन्ननिरूपकताकाधिकरणत्वाप्रसिद्ध्याव्याप्तिः संगच्छते ।

शंकते । **न चेति** । **तेनैव संबन्धेनेति** । प्रतियोगितावच्छेदकतावच्छेदकसंबन्धेनैवेत्यर्थः । **सुलभमिति** । उक्तदण्डसाध्यकस्थले हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकगगनत्वावच्छिन्नाभाववति महाकाले प्रतियोगितावच्छेदकताघटकस्वरूपसंबन्धेन गगनत्वविशिष्टस्याऽसंबद्धत्वान्नाप्रसिद्धिः । धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वावच्छि-

धूमत्वप्रकारप्रमाविशेष्यवान् वन्हेरित्यादावतिव्याप्तेः। साध्यतावच्छेदकमपेक्ष्य लघो-धूमत्वस्यैव समवायेन हेतुमन्निष्ठसंयोगसंबन्धावच्छिन्नाभावप्रतियोगितावच्छेदकतया समवायेन च धूमत्वप्रकारकप्रमाविशेष्यत्वस्याऽवृत्त्या तस्य पारिभाषिकावच्छेदकत्वाभावप्रसंगात्।

---

## लक्ष्मीः

न्नाभाववति पर्वतादौ प्रतियोगितावच्छेदकताघटक समवायेन घटत्वविशिष्टस्याऽसंबद्धत्वाद्वह्निमान् धूमादित्यादौ लक्षणसमन्वयः। **साध्यतावच्छेदकमपेक्ष्येति।** धूमत्वप्रकारकप्रमाविशेष्यत्वमपेक्ष्येत्यर्थः। **समवायेन चेति।** प्रतियोगितावच्छेदकतावच्छेदकीभूतसमवायेन चेत्यर्थः। धूमत्वावच्छिन्नाभाववति तप्तायःपिण्डे समवायेन चेति यावत्। **धूमत्वप्रकारकप्रमाविशेष्यत्वस्यावृत्त्येति।** धूमत्वप्रकारकप्रमाविशेष्यत्ववैशिष्ट्याप्रसिद्ध्या धूमत्वस्यैव यद्धर्मपदेन धर्तुं शक्यतयेतियावत्। **तस्य।** धूमत्वप्रकारकप्रमाविशेष्यत्वस्य।

ननु प्रतियोगितावच्छेदकताघटकसंबन्धेन यद्धर्मवैशिष्ट्योक्तौ असंभवसंभवेऽतिव्याप्तिदानमनुचितम् तथा हि हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववतिप्रतियोगितावच्छेदकताघटकसंबन्धेनवह्नित्वविशिष्टज्ञानस्य समवायेनाऽसंबद्धत्वा द्वह्नित्वस्य पारिभाषिकावच्छेदकत्वादिति चेन्न। अवच्छेदकतायां साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वस्य निवेश्यतया तेनैव वारणात्। तच्च पूर्ववत्साध्यतावच्छेदकताघटकसंबन्धातिरिक्तसंबन्धावच्छिन्नत्व-साध्यतावच्छेदकनिष्ठत्वोभयाभावरूपं वन्हित्वप्रतियोगिकसमवायेन वन्हित्वविशिष्टसाध्यकस्थलेऽव्याप्तिवारणार्थम्। तथा च नासंभवसंभवः वन्हित्वनिष्ठावच्छेदकतायामुभयस्यैव सत्वेन विषयितासंबन्धेन वन्हित्वविशिष्टाभावस्य लक्षणघटकत्वादिति ध्येयम्।

न च तादात्म्येन घटविशिष्टस्य समवायेन साध्यतायां कपालत्वहेतौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यत्कपालत्वं तदवच्छिन्नाभाववति घटादौ प्रतियोगितावच्छेदकताघटकसमवायेन घटविशिष्टकपालस्याऽसंबद्धतया घटस्यापि पारिभाषिकावच्छेदकतयाऽव्याप्तिरिति वाच्यम्। साध्यवच्छेदकताघटकसंबन्धातिरिक्तत्वसाध्यतावच्छे-

## लक्ष्मीः

दकप्रतियोगिकत्वोभयाभाववत्प्रतियोगितावच्छेदकताघटकसंबन्धेन यद्धर्मवैशिष्ट्याभिधानात्, समवाये तूभयाभावविरहेणोक्ताव्याप्तिनिरासात्। पटप्रतियोगिकसंयोगेन पटविशिष्टस्याभावस्य लक्षण घटकत्वात्, पटप्रतियोगिकसंयोगे घटप्रतियोगिकत्वविरहेणोभयाभावसत्वात्।

वस्तुतस्तु प्रतियोगितावच्छेदकताघटकसंबन्धेन यद्धर्मविशिष्टसामान्यं प्रतियोगितावच्छेदकावच्छिन्नाभाववति असंबद्धं प्रतियोगितावच्छेदकताघटकतत्संबन्धावच्छिन्नतद्धर्मनिष्ठावच्छेदकताक - विशेष्यताभिन्नं यत्साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकविशेष्यत्वं तदवच्छेदकत्वस्य साध्यतावच्छेदके निवेश्यत्वात्। कपालाभावप्रतियोगितावच्छेदकताघटकसमवायसंबन्धेन घटविशिष्टस्य कपालत्वावच्छिन्नाभाववति असंबद्धत्वेपि समवायसंबन्धावच्छिन्नघटनिष्ठावच्छेदकताकविशेष्यताभिन्नं तादात्म्यसंबन्धावच्छिन्नघटनिष्ठावच्छेदकताकविशेष्यतावच्छेदकत्वस्य घटे सत्वात्तादात्म्येन घटविशिष्टस्य समवायेन साध्यतायां कपालत्वादिहेतौ नाव्याप्तिरतिव्याप्तिस्तु स्थास्यत्येवेति।

अथ तथापि धूमत्वप्रकारकप्रमाविशेष्यवान् वन्हेरित्यत्राऽतिव्याप्त्यसंगतिः, अयोगोलकावृत्तित्वावच्छिन्नाभावमादायाऽतिव्याप्तिवारणादिति चेन्न। आदिपदात्तादात्म्येन धूमवतः संयोगेन साध्यतायां वन्हिहेतावतिव्याप्तिः, स्वरूपेण धूमवैशिष्ट्याप्रसिद्ध्या ऽयोगोलकावृत्तित्वस्यैव पारिभाषिकावच्छेदकत्वात्।

विशेषणता द्विविधा—एका भावीया, अपरा चाऽभावीया। तथा चाऽयोगोलकावृत्तित्वावच्छिन्नाभावप्रतियोगितावच्छेदकताघटका - भावीयविशेषणतासंबन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्वविशिष्टाप्रसिद्धेर्यद्धर्मपदेनायोगोलकावृत्तित्वस्यैव धारणादिति अस्मद्गुरवः।

हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकताघटकसंबन्धेन स्ववैशिष्ट्याभिधानेपि धूमत्वप्रकारकप्रमाविशेष्यवान् वन्हेरित्यत्र नातिव्याप्तिसंभवः, हेतुमन्निष्ठोयोधूमनिष्ठतद्व्यक्तित्वावच्छिन्नाभावस्तत्प्रतियोगितावच्छेदकताघटकीभूतस्वरूपसंबन्धेन धूमत्वप्रकारकप्रमाविशेष्यत्वविशिष्टस्य धूमाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति

नच साध्यत्व, तादृशप्रतियोगित्वयोरन्यतरावच्छेदकताघटकसंबन्धेनैव स्ववैशिष्ट्यस्य विवक्षणान्नोक्ताव्याप्त्यतिव्याप्त्योः प्रसंग इति वाच्यम्। तादात्म्येन धूमवतः संयोगेन साध्यतायां द्रव्यत्वादावतिव्याप्त्यापत्तेः। धूमापेक्षया लघुत्वेन हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धूमत्वं तदवच्छिन्नाभाववति तत्तत्परमाणौ प्रतियोगितावच्छेदकताघटकसमवायसंबन्धेन धूमविशिष्टस्य परमाणौ साध्यतावच्छेदकसंयोगेन संबद्धतया पारिभाषिकावच्छेदकत्वविरहादिति चेद्।

अत्राहुः। यद्यत्संबन्धेन यद्धर्मविशिष्टसामान्य निरुक्तधर्मावच्छिन्नाभाववति

## लक्ष्मीः

असंबद्धत्वादिति चिन्तनीयम्। **नचेति।** **साध्यत्वेति।** साध्यतावच्छेदकताघटकसंबन्धेने हेतुमन्निष्ठाभाव प्रतियोगितावच्छेदकघटकान्यतरसम्बन्धेनेत्यर्थः। **स्ववैशिष्ट्यस्य।** पारिभाषिकावच्छेदकीभूतयद्धर्मवैशिष्ट्यस्य। **नोक्ताव्याप्त्यतिव्याप्त्योः।** दण्डिमान् महाकालत्वादित्यत्राव्याप्तेः। धूमत्वप्रकारक प्रमाविशेष्यवान् वन्हेरित्यत्रातिव्याप्तेः। **प्रसङ्ग इति।** दण्डिमान महाकालत्वादित्यत्र। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकगगनत्वावच्छिन्नाभाववति महाकाले तादृशान्यतरान्तर्गत प्रतियोगिताच्छेदकताघटकस्वरूपसंबन्धेन गगनत्वविशिष्टस्य कालिकेनाऽसबद्धतया गगनत्वादेरेव पारिभाषिकावच्छेदत्वान्नाव्याप्तिः।

एवं वह्निमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकधूमत्वावच्छिन्नाभाववति अयोगालके निरूक्तान्यतरसाध्यतावच्छेदकतावच्छेदकस्वरूपसंबन्धेन धूमत्वप्रकारकप्रभाविशेष्यत्वविशिष्टस्य तादृशविशेष्यस्याऽसंबद्धत्वेन तादृशविशेष्यत्वस्यैव संबद्धत्वान्नोक्तातिव्याप्तिरिति भावः। उक्ताऽव्याप्त्यतिव्याप्तिवारणेपि स्थलान्तरेऽतिव्याप्तिमाह। **तादात्म्येनेति।** तदवच्छिन्नाभाववति। संयोगेनेत्यादिः। **धूमविशिष्टस्य।** परमाण्वन्तरस्य। **संवद्धतयेति।** तथा च यद्धर्मपदेन धूमस्योपादानाऽसंभवादिति भावः **परिभाषिकावच्छेदकत्वविरहादिति।** धूमत्वस्य यद्धर्मपदेनोपादाने तदन्यत्वस्य साध्यतावच्छेदके सत्वादितियावत्। नन्वित्यादिग्रन्थं समाधत्ते **अत्राहुरिति** तथाच हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति साध्यतावच्छेदक-

साध्यतावच्छेदकसंवन्धेनाऽसंवद्धं तत्तत्संबन्धेन तत्तद्धर्मावच्छिन्नविशेष्यताभिन्नं यत्साध्यतावच्छेदकताघटकसंवन्धावच्छिन्नं विशेष्यत्वं तदवच्छेदकसाध्यतावच्छेदकधर्मवत्वस्य विवक्षितत्वान्नोक्तदोषः। समवायेन वन्हित्वावच्छिन्नविशेष्यतायाः स्वरूपादिसंवन्धेन गगनत्वावच्छिन्नविशेष्यताभिन्नत्वादेवावच्छेदकाऽप्रसिद्धिनिबन्धनाऽसंभवस्य व्युदासादिति।

## लक्ष्मीः

संबन्धेनाऽसंवद्धं यद्यत्संबन्धेन यद्यद्धर्मविशिष्टसामान्यं तत्तसंवन्धावच्छिन्नतत्तद्धर्मावच्छिन्नावच्छेदकताकविशेष्यताभिन्नं यत्साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकविशेष्यत्वं तदवच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिः। वन्हिमान्धूमादित्यादौ धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वावच्छिन्नाभाववति पर्वतादौ समवायेन घटत्वविशिष्टस्यैवाऽसंबद्धतया समवायसंबन्धावच्छिन्नघटत्वनिष्ठावच्छेदकताकविशेष्यताभिन्नत्वस्य वन्हित्वावच्छिन्नविशेष्यतायां सत्वाल्लक्षणसमन्वयः। दण्डिमान् महाकालत्वादित्यत्र तादृशगगनत्वावच्छिन्नाभाववति महाकाले स्वरूपसंबन्धेन गगनत्वविशिष्टस्य कालिकेनाऽसंबद्धतया स्वरूपसंबन्धावच्छिन्नगगनत्वनिष्ठावच्छेदकताकविशेष्यताभेदस्य पुरुषनिष्ठसंयोगावच्छिन्नदण्डनिष्ठावच्छेदकताकविशेष्यतायां सत्त्वान्नाव्याप्तिः। एवं धूमत्वप्रकारकप्रमाविशेष्यवान् वन्हेरित्यत्र तादृशधूमत्वावच्छिन्नाभाववति अयोगोलके स्वरूपेण धूमत्वप्रकारकप्रमाविशेष्यत्वविशिष्टस्याऽसंबद्धतया तादृशविशेष्यताभिन्नत्वस्य धूमत्वप्रकारकप्रमाविशेष्यत्वनिष्ठावच्छेदकताकविशेष्यतायामसत्वान्नातिव्याप्तिः। न वा तादात्म्येन धूमविशिष्टस्य संयोगेन साध्यतायां द्रव्यत्वादिहेतावतिव्याप्तिः, तादृशधूमत्वावच्छिन्नाभाववति तादात्म्येन धूमविशिष्टस्य संयोगेनाऽसंबद्धतया तादात्म्यसंबन्धावच्छिन्नधूमनिष्ठावच्छेदकताकविशेष्यताभेदस्य तादात्म्येन धूमविशिष्टात्मकसाध्यविशेष्यतायामसत्वात्। अत्र निरुक्तधर्मावच्छिन्नाभाववतीत्यस्य साध्यतावच्छेदकसंबन्धसामान्ये यादृशधर्मावच्छिन्नप्रतियोगिकत्व,हेत्वधिकरणीभूतयत्किंचिद्व्यक्त्यनुयोगिकत्वोभावस्तादृशधर्मावच्छिन्नाभाववतीत्यर्थः। तेन घटवान् महाकालत्वादित्यत्र तदवच्छिन्नाऽसंबन्धित्वरूपप्रतियोगिवैयधिकरण्याप्रसिद्धा-

## लक्ष्मीः

वपि नक्षतिः। साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नमित्यस्य तत्संबन्धावच्छिन्नावच्छेदकताकमित्यर्थो बोध्यः।

अत्र कालिकसंबन्धावच्छिन्नधूमत्वनिष्ठावच्छेदकताकधूमनिष्ठविशेष्यतायाः साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकविशेष्यताभिन्नत्वात्तदवच्छेदकत्वस्य धूमत्वे सत्वादतिव्याप्तिरतः साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नत्वमवच्छेदकतायां निवेशितम्। अथात्र यद्यत्संबन्धेन यद्धर्मविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति साध्यतावच्छेदकसंबन्धेनाऽसंबद्धं तत्तत्संबन्धावच्छिन्नतत्तद्धर्मनिष्ठावच्छेदकताभिन्ना या साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतावत्साध्यतावच्छेदकमित्यादि निवेशेनैव सामञ्जस्ये विशेष्यताभेदनिवेशो व्यर्थ इति चेन्न। प्रतियोगितावच्छेदकताविशेष्यतावच्छेदकतासाधारणावच्छेदकतात्वस्य दुर्वचतया तत्तदवच्छेदकताभिन्नावच्छेदकतानिवेशे महागौरवापत्तेः। केचित्तु सर्वसाधारणावच्छेदकतात्वस्य दुर्वचतया प्रतियोगितावच्छेकताभेदनिवेशे कम्बुग्रीवादिमद्वान् द्रव्यत्वादित्यादावतिव्याप्तिः, कम्बुग्रीवादिमत्त्वे प्रतियोगितावच्छेदकताविरहेण घटत्वादिनिष्ठप्रतियोगितावच्छेदकताभेदस्य साध्यतावच्छेदकतायां सत्वात्। नचोत्तरत्रापि "भेदानुयोगिकोटौ" प्रतियोगितावच्छेदकताया एव निवेशात्कम्बुग्रीवादिमत्त्वे प्रतियोगितावच्छेदकताविरहेण नातिव्याप्तिरिति वाच्यम्। कम्बुग्रीवादिमद्वान् कपालत्वादित्यत्राव्याप्तिः, तत्र साध्यतावच्छेदके प्रतियोगितावच्छेदकत्वविरहात्।

न च यद्यत्संबन्धेन यद्धर्मविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति साध्यतावच्छेदकसंबन्धेनाऽसंबद्धं तत्तत्संबन्धावच्छिन्नतत्तन्निष्ठप्रकारतावच्छेदकताभिन्नसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्नप्रकारतावच्छेदकतावत्त्वं साध्यतावच्छेदके निवेश्यम्, तथा च न कुत्रापि दोष इति वाच्यम। लाघवविरहात्। अत्र यद्यत्संबन्धेन यद्धर्मविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति साध्यतावच्छेदकसंबन्धेनाऽसंबद्धं तद्धर्मभिन्नं साध्यतावच्छेदकमित्युक्तौ तादृशप्रतियोगितावच्छेदकं यन्महानसीयवन्हिवृत्तित्वविशिष्टवन्हित्वं तदवच्छिन्नाभाववति पर्वतीयवन्हौ विशिष्टवन्हित्वस्याऽसंबद्धतया तद्भिन्नत्वस्या-

नन्वेवमपि विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिः, तादृशद्रव्यत्वाभाववति गुणादौ विशिष्टसत्वस्य संबद्धत्वात्। स्वस्य तादृशधर्मावच्छिन्नाभाववन्निष्ठसंबन्धितानवच्छेदकत्वविवक्षया कथं चित्तत्रातिव्याप्तिवारणेपि सत्तावान् भावत्वादित्यादा-

## लक्ष्मीः

सत्वाद् वन्हिमान् धूमादित्यादावव्याप्तिः, परन्तु तत्र तद्धर्मावच्छिन्नविशेष्यताभिन्न विशेष्यतावच्छेदकमित्युक्तावपि न निस्तारः, प्रकारान्तरानुसरणे तु व्यर्थमेव विशेष्यत्वानुधावनमित्यन्यत्र विस्तरः।

अथात्र तादृशविषयताभिन्नविषयतावच्छेदकत्वमेव निवेश्यतां किं विशेष्यतानिवेशेन। अत एव सामान्यनिरुक्तौ पक्षविशेष्यकभ्रम इत्यस्य व्याख्यायां विशेष्यताया व्यावृत्तिरभिहिता भट्टाचार्येणेति चेन्न। लाघवाभावात्। व्याप्यधर्मघटितलक्षणत्वसंभवे व्यापकधर्मघटितस्याव्याप्यत्वाच्च। अत एव स्मृतिं प्रति अनुभवत्वापेक्षया लघुना ज्ञानत्वेन न कारणत्वम्, व्यापकधर्मस्यान्यथासिद्धिनिरूपकत्वात्। नन्वत्र महानसीयवन्हिवृत्तित्वविशिष्टजातिमद्वान् धूमादित्यादावतिव्याप्तिः, हेतुमन्निष्ठसाध्याभावप्रतियोगितावच्छेदकावच्छिन्नाभाववति पर्वते तादृशजातिविशिष्टस्य वन्हेः संबद्धतया तादृशं गगनत्वादिकमेव, तदवच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति चेन्न। यादृशसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताघटकसंबन्धावच्छिन्नतादृशावच्छेदकताकनिरूपकताविशिष्टसामान्यं निरुक्तधर्मावच्छिन्नाभाववति असंबद्धं तादृशावच्छेदकतानिष्ठावच्छेदकताकविशेष्यताभेदनिवेशः। तथा च महानसीयवन्हिवृत्तित्वविशिष्टजातिगतसमुदायत्वावच्छिन्नानुयोगिताक-पर्याप्तिकावच्छेदकताकनिरुपकताविशिष्टस्य महानसीयवन्हेः पर्वतादावसंबद्धत्वान्नातिव्याप्तिरिति दिक्।

लक्षणान्तरानुसरणे बीजमाह। **नन्विति** । **एवमपि** । यथोक्ताऽनतिरिक्तवृत्तित्वविवक्षणेपि। **तादृशद्रव्यत्वाभाववति** । जातिमद्गुणादिनिष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वत्वावच्छिन्नाभाववति । **संबद्धत्वादिति** । विशिष्टसत्वस्य गुणादिनिरूपितवृत्तितावत्त्वादित्यर्थः। विशेष्यवृत्तिधर्मस्य विशिष्टानुयोगिकाभावानंगीकारादिति न्यायादिति भावः। **स्वस्य** । पारिभाषिकावच्छेदकस्य। **विवक्षयेति** । हेतुमन्निष्ठा-

वतिव्याप्तिः। सत्तात्वाद्यवच्छिन्नाभाववति सामान्यादौ साध्यताघटकसमवायसंबन्धेन संबन्धित्वाप्रसिद्धेः, सत्तात्वस्य निरुक्तावच्छेदकत्वाभावात्।

न च साध्यतावच्छेदकसंबन्धसामान्ये तदवच्छिन्नाभाववदनुयोगिकत्व— यद्धर्मावच्छिन्नप्रतियोगिकत्वोभयाभावस्तत्त्वं विवक्षितम्। अतो नोक्तदोष इति वाच्यम्। तथासति प्रमेयधूमवान् वन्हेरित्यादावतिव्याप्त्यापत्तेः धूमत्वघटित

---

## लक्ष्मीः

भावप्रतियोगितावच्छेदकावच्छिन्नाभाववन्निष्ठाधिकरणतानिरूपित - निरूपकतानवच्छेदकत्वविवक्षयेत्यर्थः। सत्तात्वे तादृशनिरूपकतावच्छेदकत्वसत्वे विशिष्टसत्तात्वे तदभावो न संभवति उक्तन्यायादित्यत आह। **कथंचिदिति**। **तत्र**। विशिष्टसत्तावान् जातेरित्यत्र। **अतिव्याप्तिवारणेपीति**। विशिष्टसत्तात्वस्यापि गुणनिरूपितवृत्तितानवच्छेदकत्वादिति भावः। **संबन्धित्वाप्रसिद्धेरिति**। तथा च सत्तात्वं न हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं किन्तु घटत्वादिकमेवेति भावः। तदन्यत्वस्य साध्यतावच्छेदके सत्वाद् भवत्यतिव्याप्तिरिति यावत्। **निरुक्तावच्छेदकत्वाभावात्**। पारिभाषिकावच्छेदकत्वाभावात् शंकते। **न चेति**। **तदवच्छिन्नाभाववदिति**। हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववदित्यर्थः **तत्त्वमिति**। तादृशधर्मत्वमित्यर्थः। **विवक्षितमिति**। पारिभाषिकावच्छेदकत्वेनेत्यर्थः। **नोक्तदोष इति**। नोक्तातिव्याप्ती इत्यर्थः। समवायसंबन्धे गुणानुयोगिकत्वसत्वेपि विशिष्टसत्ताप्रतियोगिकत्वाभावात्। एवं सत्ताप्रतियोगिकत्वसत्वेऽपि सामान्यानुयोगिकत्वाभावाच्चेति भावः। **तथासति**। संबन्धधर्मिकोभयाभावघटितलक्षणार्थनिर्वचने सति। **धूमत्वघटितेति**। धूमत्वावच्छिन्नप्रतियोगिकत्वघटितेत्यर्थः। **तादृशोभयत्वापेक्षया**- तादृशधूमत्वाभाववदनुयोगिकत्व-धूमत्वावच्छिन्नप्रतियोगिकत्वोभयत्वापेक्षया। **प्रमेयधूमत्वघटितेति**। प्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वघटितेत्यर्थः। **तादृशोभयत्वस्य**। तादृशधूमत्वावच्छिन्नाभाववदनुयोगि-

**स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतत्कत्वं वा तदनतिरिक्तवृत्तित्वं वक्तव्यम् ।**

---

तादृशोभयत्वापेक्षया प्रमेयधूमत्वघटिततादृशोभयत्वस्य गुरुतया तदवच्छिन्नप्रतियोगित्वाऽप्रसिद्धेरित्यस्वरसादाह स्वविशिष्टेति ।

**स्वं**—पारिभाषिकावच्छेदकत्वेनाभिमतम् । तथा च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्विशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं स एव पारिभाषिकावच्छेदकः, तदन्यत्वं साध्यतावच्छेदके विशेषणमिति भावः ।

---

## लक्ष्मीः

कत्व, प्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वोभयत्वस्य । **तदवच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति ।** धूमत्वावच्छिन्नाभाववदनुयोगिकत्व—प्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वोभयत्वावच्छिन्नप्रतियोगित्वा—प्रसिद्धेरित्यर्थः । न च तादृशोभयनिष्ठप्रतियोगिताकाभाव एव निवेश्यतामिति वाच्यम् । तथा सति संयोगसामान्ये एव तादृशघटत्वावच्छिन्नाभाववत्पर्वतानुयोगिकत्व वह्नित्वावच्छिन्नप्रतियोगिकत्व घटत्रितयाभावस्य उभयप्रतियोगिकस्य सत्वात्, वह्नित्वस्य पारिभाषिकावच्छेदकत्वाद्वह्निमान् धूमादित्यत्राव्याप्त्यापत्तेः । **इत्यस्वरसात्** । अतिव्याप्तिदोषात् । यद्धर्मपदेन प्रमेयधूमत्वस्य धर्तुमशक्यत्वात्, धूमत्वस्य धर्त्तुं शक्यत्वेपि तदवच्छिन्नविशेष्यताभिन्न विशेष्यतावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति भावः । **तथा च ।** स्वपदस्य पारिभाषिकावच्छेदकपरत्वे च । ननु हेतुमन्निष्ठमहानसीयवन्ह्यभावप्रतियोगितावच्छेदकवह्नित्वस्य वह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेन वह्नित्वस्य पारिभाषिकावच्छेदकत्वापत्तिरिति चेन्न । प्रतियोगितावच्छेदकमित्यस्य प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणमित्यर्थात् । विशिष्टसत्तावान् जातेरित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वस्य विशिष्टसत्तात्वाश्रयसत्तासंबन्धिगुणादिनिष्ठाभावप्रतियोगितावच्छेदकत्वाद्विशिष्टसत्तात्वस्य पारिभाषिकानवच्छेदकत्वात्, "द्रव्यत्वादेरेव तथात्वात्" अतिव्याप्तिवारणाय **स्वविशिष्टेति** । स्वावच्छिन्नेति तदर्थः । **अत्र** । एतन्निरुक्तौ

अत्र स्वविशिष्टसंबन्धित्वं साध्यतावच्छेदकसंबन्धेन ग्राह्यम्। तेन प्रतियोगितावच्छेदकमात्रस्यैव यथा कथंचित्संबन्धेन यत्स्वविशिष्टसंबन्धि तन्निष्ठाभावप्रतियोगितावच्छेदकत्वेपि न पारिभाषिकावच्छेदकाप्रसिद्धिः।

अभावश्चात्र प्रतियोगिव्यधिकरणो बोध्यः। तेन घटत्वाद्यवच्छेदकमात्रस्यैव स्वविशिष्टसंबन्धिनिष्ठसंयोगसबन्धावच्छिन्नाभावप्रतियोगितावच्छेदकत्वात्पारिभाषिकावच्छेदकाप्रसिद्धया वन्हिमान् धूमादित्यादौ नाव्याप्तिः।

प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यसंबन्धित्वं

## लक्ष्मी

इत्यर्थः। सप्तम्यर्थो घटकत्वम्। तस्य स्वविशिष्टसंबन्धित्वेऽन्वयः। **तेन।** साध्यतावच्छेदकसंबन्धेन स्वविशिष्टसंबन्धित्वविवक्षणेन। **प्रतियोगितावच्छेदकमात्रस्यैव।** हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमात्रस्यैव। **यथा कथंचित्संबन्धेनेति।** साध्यतावच्छेदकसंबन्धान्यसंबन्धेनेत्यर्थः, कालिकादिनेति यावत्। **यत्स्वविशिष्टसंबन्धि।** घटत्वविशिष्टसंबन्धि, पर्वतादि। **न पारिभाषिकावच्छेदकाप्रसिद्धिरिति।** साध्यतावच्छेदकसंयोगसंबन्धेन घटत्वविशिष्टसंबन्धि भूतलनिष्ठाभावप्रतियोगितानवच्छेदकत्वाद् घटत्वस्येति भावः।

**अभावश्चेति।** स्वविशिष्टसंबन्धिनिष्ठाभावश्चेत्यर्थः। **प्रतियोगिव्यधिकरणो बोध्य** इति। स्वप्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नासंबन्धी यः यद्धर्मविशिष्टसंबन्धी तत्र वर्तमानो ग्राह्य इत्यर्थः। **तेन।** स्वविशिष्टसंबन्धिनिष्ठाभावे प्रतियोगिवैयधिकरण्यनिवेशेन। **स्वविशिष्टसंबन्धीति।** संयोगेन घटत्वविशिष्टसंबन्धीत्यर्थः। **प्रतियोगितावच्छेदकत्वादिति।** संयोगेन द्रव्यस्याव्याप्यवृत्तित्वादिति भावः। समवायेन द्रव्यमात्रस्य व्याप्यवृत्तित्वेनाऽसंभवविरहेणाह। **नाव्याप्तिरिति। फलितार्थ इति।** तथा च प्रतियोगितावच्छेदकसंबन्धेन यादृशप्रतियोगितावच्छेदकावच्छिन्नासंबन्धित्वं स्वविशिष्टसंबन्धिनः तादृशप्रतियोगितानवच्छेदकं हेतु-

स्वविशिष्टसंबन्धिनो विशेषणं देयमिति तु फलितार्थः। तेनाभावमात्रस्यैव यथा कथञ्चित्कालिकादिसंबन्धेन प्रतियोगिनः संबन्धिनि वृत्तावपि न क्षतिः। न वा हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वादेः सत्तात्वाद्यवच्छिन्नसंबन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकत्वेपि सत्तावान् जातेरित्यादावव्याप्तिः।

## लक्ष्मीः

मन्निष्ठाभावप्रतियोगितावच्छेदकं स्वं पारिभाषिकावच्छेदकमिति यावत्। **तेन**। प्रतियोगितावच्छेदकसंबन्धनिवेशेन। **अभावमात्रस्यैव**। घटाभावस्य। **प्रतियोगिनः**। घटस्य। **संबन्धिनि**। पर्वते। **वृत्तावपीति**। घटाभावादेःप्रतियोगिवैयधिकरण्याभावेपीत्यर्थः। तथा च वह्निमान् धूमादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद् घटत्वं तस्य वह्नित्वविशिष्टसंबन्धिनिष्ठो यः संबन्धसामान्येन प्रतियोगिव्यधिकरणाभावो न घटाभावः किन्तु तत्पर्वताऽसमानकालीनकर्माभावस्तत्प्रतियोगितानवच्छेदकत्वेन वन्हित्वस्य पारिभाषिकावच्छेदकत्वापत्तावपीति यावत्। **न क्षतिः**। नाव्याप्तिः। वन्हित्वविशिष्टसंबन्धिनि पर्वतादौ प्रतियोगितावच्छेदकीभूतसंयोगसंबन्धेन घटाभावस्यैव प्रतियोगिव्यधिकरणतया घटत्वस्य तत्प्रतियोगितावच्छेदकत्वेन स्वपदेन वन्हित्वस्य धारणासंभवात्। घटत्वादेरेव धारणादिति भावः। प्रतियोगितावच्छेदकविशिष्टेत्यस्य फलमाह। **नवेति**। **प्रतियोगितानवच्छेदकत्वेपीति**। सत्तात्वावच्छिन्नसंबन्धिगुणादिनिष्ठविशिष्टसत्ताभावस्य सत्तारूपप्रतियोगिसमानाधिकरणतया विशिष्टसत्तात्वस्य तादृशाभावान्तरप्रतियोगितानवच्छेदकत्वेपीत्यर्थः। सत्तात्वस्य स्वपदेन धर्तुं शक्यत्वेपीति यावत्। **नवाऽव्याप्तिरिति**। प्रतियोगितावच्छेदकावच्छिन्नाऽसंबन्धित्वविवक्षणे सत्तात्वावच्छिन्नसंबन्धिगुणादिनिष्ठविशिष्टसत्ताभावस्य विशिष्टसत्तात्वरूपप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणतया तत्प्रतियोगितावच्छेदकत्वस्यैव विशिष्टसत्तात्वे सत्वेन स्वपदेन सत्तात्वस्य धर्त्तुमशक्यतया विशिष्टसत्तात्वस्य धर्त्तव्यतया तदवच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वस्य साध्यतावच्छेदके सत्वादिति भावः।

तादृशाभावप्रतियोगित्वं तु साध्यतावच्छेदकसंबन्धावच्छिन्नं ग्राह्यम्। तेन न घटत्वादेरपि स्वविशिष्टसंबन्धिनिष्ठसमवायाद्यवच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकत्वेपि वन्हिमान् धूमादित्यादाववच्छेदकाप्रसिद्धिनिबन्धनो दोषः।

वस्तुतः पूर्ववदिहापि साध्यतावच्छेदकसंबन्धेन स्वविशिष्टसंबन्धिनो वक्तव्यम्। तेन वृत्त्यनियामकसंबन्धेन साध्यतायां तादृशसंबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धावपि नाव्याप्तिः।

प्रतियोगितानवच्छेदकमित्यत्रावच्छेदकत्वं हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकताघटकसंबन्धेन बोध्यम्। तेन घटत्वादेर्विषयितासंबन्धेन घटत्वादिविशिष्टस्य ज्ञानादेः संयोगेनाभावस्य प्रतियोगिव्यधिकरणस्य घटत्वादिविशिष्टसंबन्धिनिष्ठस्य प्रतियोगितायाः विषयितासंबन्धेनावच्छेदकत्वेपि न तादृशावच्छेदकाप्रसिद्धिः।

## लक्ष्मीः

ननु वह्निमान् धूमादित्यादौ सर्वत्राऽऽसंभवः, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वादेर्घटत्वविशिष्टसंबन्धिभूतलादौ समवायेन घटाभावप्रतियोगितावच्छेदकतया स्वपदेन कस्यापि धर्त्तुमशक्यत्वादत आह। **तादृशाभावप्रतियोगित्वन्तु** इति। स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगित्वं तु इत्यर्थः। **तेन**। साध्यतावच्छेदकसंबन्धेन तादृशप्रतियोगित्व विवक्षणेन। **स्वविशिष्टसंबधीति**। घटत्वविशिष्टसंबन्धीत्यर्थः। **दोषः**। असंभवः। **नेति** पूर्वेणान्वयः। विवक्षणे तु तादृशघटत्वादेर्घटत्वविशिष्टसंबन्धिभूतलादौ साध्यतावच्छेदकसंयोगेनाभावप्रतियोगितानवच्छेदकत्वान्न पारिभाषिकावच्छेदकाप्रसिद्धिः। **निरुक्तप्रतियोग्यसंबन्धित्वमेवेति**। प्रतियोगितावच्छेदकावच्छिन्नासंबन्धित्वमेवेत्यर्थः। एवकारेण प्रतियोगितायां साध्यतावच्छेदकसंबन्धवावच्छिन्नत्वस्य व्यावृत्तिः। **तेन**। स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमित्यत्रावच्छेदकत्वस्य प्रतियोगितावच्छेदकताघटकसंबन्धेन विवक्षणेन। **घटत्वादेरिति**। धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वादेरित्यर्थः। **प्रतियोगितायः इति**। स्वपदग्राह्यघटत्वविशिष्टसंबन्धिभूतलादिनिष्ठो यो विषयितासंबन्धेन घटत्व-

ननूक्तपारिभाषिकाऽवच्छेदकत्वद्वयस्य प्रवेशे मूलोक्तप्रतियोगिव्यधिकरणस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणार्थकत्वं विफलम्, हेतु-

## लक्ष्मीः

विशिष्टज्ञानस्य संयोगेनाभावस्तदीयप्रतियोगिताया इत्यर्थः। **न तादृशाऽवच्छेदकाप्रसिद्धिरिति।** न पारिभाषिकाप्रसिद्धिरित्यर्थः। **विवक्षणे तु** स्वपदग्राह्यघटत्वविशिष्टसंबन्धिनि भूतलादौ प्रतियोगितावच्छेदकताघटकसमवायेन घटत्वविशिष्टस्य संयोगेनाभावविरहेणाभावान्तरीयप्रतियोगितानवच्छेदकत्वाद् घटत्वस्य पारिभाषिकावच्छेदकत्वोपपत्तिः।

अथ ज्ञानादेःसंयोगेनाधिकरणस्याऽप्रसिद्ध्या तदभावस्य प्रतियोगिवैयधिकरण्यविरहेण कथं लक्षणघटकत्वमिति चेन्न। मूलोक्तप्रतियोगिवैयधिकरण्यस्य संबन्धधर्मिकोभयाभावघटितत्वेन वन्हिमान् धूमादित्यादौ संयोगेन रूपाभावस्य यथोक्तप्रतियोगिव्यधिकरणतया धूमादिमन्निष्ठाभावप्रतियोगितावच्छेदकरूपत्वादेः संयोगेन रूपाधिकरणाप्रसिद्ध्या रूपाद्यभावस्य संयोगेन यथाश्रुत प्रतियोगिवैयधिकरण्याभावेन स्वपदग्राह्यवन्हित्वविशिष्टसंबंधिनिष्ठतादृशाभावान्तरप्रतियोगितानवच्छेदकतया वन्हित्वादेः पारिभाषिकावच्छेदकत्वापत्त्या इदमीयप्रतियोगिवैयधिकरण्यस्यापि साध्यतावच्छेदकसंबन्धसामान्ये यदभावप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्व स्वविशिष्टसंबन्धियत्किञ्चिद्व्यक्त्यनुयोगिकत्वोभयाभावरूपस्य निवेशनीयतया संयोगेन ज्ञानादेरभावस्यापि निरुक्तप्रतियोगिवैयधिकरण्यसंभवादिति।

शङ्कते। **नन्विति। उक्तपारिभाषिकावच्छेदकत्वद्वयस्य प्रवेशे-इति।** स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेतुमन्निष्ठाभाव प्रतियोगितावच्छेदकावच्छिन्नासंबन्धी प्रतियोगितावच्छेदकावच्छिन्नाभाववति असंबद्धं यद्धर्मविशिष्टसामान्यम्, स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं प्रतियोगितावच्छेदकावच्छिन्नासंबन्धिस्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमिति पारिभाषिकावच्छेदकत्वद्वयस्येत्यर्थः। **विफलमिति।**

मन्निष्ठाभावप्रतियोगितावच्छेदकस्य द्रव्यत्वत्वादेर्विशिष्टसत्तात्वाद्यवच्छिन्नवन्निष्ठाभाव प्रतियोगितानवच्छेदकत्वादेव विशिष्टसत्तावान् जातेरित्यादावतिव्याप्त्यभावात् ।

## लक्ष्मीः

स्वप्रतियोगिताश्रयानधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकाव-च्छिन्नाऽसंबन्धिप्रतियोगितावच्छेदकावच्छिन्नाभाववति असंबद्धं यद्धर्म विशिष्टसामान्यम्, तस्य स्वप्रतियोगिताश्रयानधिकरणहेत्वधिकरणवृत्त्यभावप्रतियोगितावच्छेदकं प्रतियोगितावच्छेदकावच्छिन्नासंबन्धि-तद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तस्यैव वा पारिभाषिकावच्छेदकत्वं वक्तव्यमिति भावः। ननु सिद्धान्तलक्षणोक्तरीत्या विशिष्टसत्तावान् जातेरित्यादावतिव्याप्तिवारणार्थमेव तद्विवक्षणं सार्थकमित्यत आह। **हेतुमन्निष्ठेति**। जातिमन्निष्ठेत्यर्थः। **प्रतियोगितानवच्छेदकत्वादेवेति**। जातिसमानाधिकरणाभावीयप्रतियोगितावच्छेदकद्रव्यत्वत्वावच्छिन्नाभाववन्निरूपितवृत्तितानवच्छेदकत्वादेवेत्यपि बोध्यम्। **इत्यादाविति**। आदिना भूतत्वमूर्तत्वोभयवानित्यस्य परिग्रहः। तत्रापि मूर्तत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं यत्स्पर्शत्वं तदवच्छिन्नाभाववति भूतत्वमूर्तत्वोभयत्वविशिष्टस्याऽसंबद्धत्वात् स्पर्शत्वस्य तदुभयत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वाच्चेति भावः।

अथात्र इदमीय प्रतियोगिवैयधिकरण्येपि प्रतियोगितावच्छेदकावच्छिन्नस्य वैयर्थ्यं कथं नोक्तम्, द्रव्यं घटत्वादित्यत्र घटभेदविशिष्टद्रव्यत्वाभावस्य प्रतियोगिताश्रयप्रतियोगिव्यधिकरणत्वाभावेन मूलोक्तलक्षणाघटकतयाऽभावान्तरमादाव्याप्तिविरहादिति चेन्न। नित्यज्ञानानुयोगिकविषयितासंबन्धेन घटस्य साध्यतायां नित्यज्ञानत्व हेतावव्याप्तिः, हेतुसमानाधिकरणस्य समवायेन पटाभावस्य प्रतियोगितावच्छेदकं यत्पटत्वं तस्य साध्यतावच्छेदकीभूतनित्यज्ञानानुयोगिकविषयितया घटत्वविशिष्टसंबन्धिनिष्ठनित्यज्ञानान्यत्वविशिष्टघटाभावप्रतियोगितानवच्छेदकत्वाच्च। तन्निवेशे च नित्यज्ञानान्यत्वविशिष्टघटाभावस्यैव प्रतियोगिव्यधिकरणत्वसंभवात्।

मूलोक्तप्रतियोगिव्यधिकरणस्य प्रतियोगिताश्रयानधिकरणार्थकत्वे विशिष्टसत्तावान् जातेरित्यादौ द्रव्यत्वाभावमादायातिव्याप्तिविरहेपि

न च संयोगेन घटाद्यभावस्यैव तत्समनियतघटविशिष्टवाच्यत्वाद्यभावत्वात्। तत्प्रतियोगित्वावच्छिन्नस्य च वाच्यत्वस्य सर्वत्र सत्वात्प्रतियोगिव्यधिकरणाभावस्यैवाऽप्रसिद्धिः स्यात्, यदि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यप्रवेशो मौलो न स्यादिति वाच्यम्। यत्प्रतियोगित्वावच्छिन्नस्यानधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकीभूतधर्मो यद्विशिष्टसंबन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकस्तत्पारिभाषिकावच्छेदकमित्यस्य निर्दोषत्वात्। घटाभावस्य घटविशिष्टवाच्यत्वाभावस्वरूपत्वेऽपि तस्य घटत्वावच्छिन्न यत्प्रतियोगित्व तदाश्रयव्यधिकरणत्वस्य सुलभत्वादिति।

## लक्ष्मीः

असंभवमाशङ्कते। **न चेति**। **तत्समनियतेति**। घटाभावसमनियतेत्यर्थः। वाच्यत्वे घटवैशिष्ट्यं संयोगघटितसामानाधिकरण्यसंबन्धेन। **वाच्यत्वाद्यभावत्वादिति**। आदिना घटविशिष्टद्रव्यादेः परिग्रहः। तेन वन्हिमान् धूमादित्यादौ साध्यतावच्छेदकीभूतसंयोगसंबन्धेन वाच्यत्वाधिकरणत्वाप्रसिद्धावपि न क्षतिः। **तत्प्रतियोगित्वावच्छिन्नस्य**। घटाभावप्रतियोगित्वावच्छिन्नस्य, वाच्यत्वस्य। उक्तादिपदग्राह्यद्रव्यस्य प्रमेयस्य वा। **सर्वत्र**। पर्वतादौ। **सत्वादिति**। द्रव्यादिरूपप्रतियोगिनः संयोगेनाधिकरणतायाः पर्वतादौ सत्वादिति भावः। **अप्रसिद्धिः स्यादिति**। घटाभावस्य प्रतियोगिताश्रयवाच्यत्वादिसमानाधिकरणत्वादिति भावः। तथाचाऽसम्भवसंगतिरितियावत्। समनियताभावयोरैक्येऽपि प्रतियोगितावच्छेदकभेदादेव प्रतियोगिताभेद इत्याशयेन समाधत्ते। **यत्प्रतियोगित्वावच्छिन्नस्येति**। यद्धर्मावच्छिन्नप्रतियोगित्वावच्छिन्नस्येत्यर्थः। यद्धर्मपदेन घटत्वस्योपादानम्, न तु वाच्यत्वत्वादेः, तदवच्छिन्नप्रतियोगित्वावच्छिन्नाधिकरणत्वस्यैव हेत्वधिकरणे सत्वात्। **तत्प्रतियोगितेति**। घटाभावप्रतियोगितेत्यर्थः। **यद्विशिष्टसंबंधीति**। घटत्वविशिष्टसम्बन्धीत्यर्थः। **तस्य**। घटाभावस्य। **तदाश्रयेति**। घटत्वावच्छिन्नप्रतियोगिताश्रयेत्यर्थः।

न च तत्रावच्छेदकभेदेपि प्रतियोगितैक्य युक्तम् । घटपटाद्यभावानामेक-प्रतियोगिताकत्वापत्तेरिति चेत् ।

अत्र प्राञ्चः । यत्प्रतियोगिताश्रयानधिकरणं हेत्वधिकरणं तत्प्रतियोगिता-वच्छेदकेत्याद्यभिधाने वन्हिमान् धूमादित्यत्राव्याप्तिः, स्वरूपसंबन्धात्मिकायाः प्रतियोगितायाः प्रतिव्यक्तिभिन्नत्वात् । वन्हित्वावच्छिन्नाभावीयं महानसीयवन्हिनिष्ठं यत्प्रतियोगित्वं तदवच्छिन्नानधिकरणहेतुमत्पर्वतादिनिष्ठवन्हिसामान्याभावप्रतियोगिता-

---

## लक्ष्मीः

**न चेति** । युक्तमिति परेणान्वयः । **तत्र** । घटाभावघटविशिष्ट-वाच्यत्वाद्यभावयोः । **प्रतियोगितैक्यमिति** । ऐक्ये पूर्वोक्तदोषताद-वस्थ्यमिति हृदयम् । **एकप्रतियोगिताकत्वापत्तेरिति** । विभिन्नधर्मा-वच्छिन्नप्रतियोगित्वं यद्यभिन्नं स्यात्तदा घटाभावप्रतियोगित्वं पटा-भावनिरूपितं स्यादित्यापत्तिर्बोध्या । न चाभावभेद एव प्रतियोगि-ताभेदनियामकोस्तु इति वाच्यम् । घटाभावनिष्ठस्य पटाभावभेदस्य घटाभावरूपतया घटनिष्ठप्रतियोगित्व पटाभावनिष्ठप्रतियोगित्व-योरैक्यापत्तेरुक्तत्वात् । अभावप्रतियोगिकाऽभावाधिकरणका-भावस्याऽधिकरणरूपत्वात् । विशिष्टसत्तावान् जातेरित्यादौ-द्रव्यत्वाभावमादायातिव्याप्तिवारणेऽपि वह्निमान् धूमादित्यत्रा-व्याप्तिः, तथा हि प्रतियोगिवैयधिकरण्यमित्यस्य स्वीयप्रतियोगिता-श्रयानधिकरण"हेत्वधिकरण" वृत्तित्वार्थकत्वे गौरवम्, असंभवश्च घटाभावादेरपि घटीयसंयोगेन प्रमेयाभावतया प्रतियोग्यसमानाधिकर-णाभावाऽप्रसिद्धेः, अतो लाघवाच्च स्वीययत्किंचित्प्रतियोगिताश्रयानधि-करणत्वं हेत्वधिकरणे विवक्षणीयम् । एतेन "प्रतियोगितायां यत्त्वतत्त्व-निवेशेन" एकधर्मावच्छिन्नप्रतियोगिताया भिन्नत्वेपि कथं वन्ह्यभावः प्रतियोगिव्यधिकरणः, तत्प्रतियोग्यनधिकरणत्वस्य हेत्वधिकरणेऽ-सत्वादिति समाहितम् । प्रतियोगिभेदेन प्रतियोगिता भेदात्स्वीय यत्किं-चित्प्रतियोगिताश्रयीभूतमहानसीयवन्ह्याद्यनधिकरणत्वस्य पर्वते सत्वात्पर्वतनिष्ठवन्ह्यभावस्यापि लक्षणघटकत्वादिति प्रतियोगिता-वच्छेदकावच्छिन्नवैयधिकरण्यनिवेश इति प्राचां मतमाह । **अत्र प्राञ्च इति** । **तत्प्रतियोगितावच्छेदकेत्याद्यभिधाने** इति । यत्प्रति-

वच्छेदकीभूतवन्हित्वादेः स्वविशिष्टसंबन्धिनिष्ठनिरुक्तप्रतियोगिव्यधिकरणाभाव-प्रतियोगितानवच्छेदकत्वात् । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्य-प्रवेशे तु तादृशप्रतियोगिताया अवच्छेदकं यद्वन्हित्वादिकं तदवच्छिन्नानधिकरणत्वं न हेतुमतः पर्वतादेरित्यदोष इत्याहुः ।

## लक्ष्मीः

योगिताश्रयानधिकरणं हेत्वधिकरणं तत्प्रतियोगितावच्छेदकीभूतयद्विशि-ष्टसंबन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकं इत्यभि-धाने इत्यर्थः । **प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यप्रवेशे तु इति** । यादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वं हेतुमत इति प्रवेशे तु इत्यर्थः । **तादृशप्रतियोगितायाः** । वन्हिसामान्याभावप्रति-योगितायाः । **तदवच्छिन्नेति** । वन्हित्वावच्छिन्नेत्यर्थः । **इत्यदोषः** । वन्हिमान् धूमादित्यत्र नाव्याप्तिः ।

अथ प्रतियोगिभेदेपि समनियताभावप्रतियोगिताया अभेदपक्षे अभावभेदेनैव प्रतियोगिताभेदात् वन्हित्वादिसामान्यधर्मावच्छिन्न-प्रतियोगिता एकैव न तु नानेति, प्रतियोगितावच्छेदकावच्छिन्नत्वनि-वेशो व्यर्थः, तादृशप्रतियोगिताश्रयो यथा महानसीयवन्हिस्तथा पर्व-तीयवन्हिरपि तदनधिकरणत्वस्य पर्वते विरहादभावान्तरमादाय ना-व्याप्तिसंभव इति चेन्न । एवमपि विशिष्टसत्तावान् जातेरित्यत्राति-व्याप्तिः, विशिष्टसत्ताभावस्य द्रव्यत्वाभावसमनियततया ऐक्येन द्रव्य-त्वनिष्ठप्रतियोगिताया अपि सत्तानिष्ठतया गुणादेः प्रतियोगिताविशि-ष्टसत्ताधिकरणतया द्रव्यत्वाभावस्यापि प्रतियोगिताश्रयव्यधिकरणत्वा-भावात् । नचैवं समवायेन गगनाभावस्य संयोगेन सत्ताभावाभिन्न-तया प्रतियोगिव्यधिकरणाभावाऽप्रसिद्ध्यैव नातिव्याप्तिरिति वाच्यम् । तुल्ययुक्त्याऽसंभवापत्तेः । संयोगेन घटाभावस्य घटवद्वृत्ति-त्वविशिष्टप्रमेयाभावादभिन्नतया तत्प्रतियोगिताविशिष्टस्य प्रमेयस्य हेत्वधिकरणे सत्वेन प्रतियोगिव्यधिकरणाभावाप्रसिद्धेः । एवंचाऽ-संभववारणायैव प्रतियोगितावच्छेदकावच्छिन्नत्वं निवेशनीयम् । एवं च प्रमेयस्य केवलान्वयित्वेपि संयोगेन घटाभावस्य तत्प्रतियोगिता-वच्छेदकघटवद्वृत्तित्वविशिष्टप्रमेयत्वत्वावच्छिन्नप्रतियोगिवैयधिकरण्य

परे तु प्रतियोगिभेदेपि एकधर्मावच्छिन्नप्रतियोगितालाघवादेकैवेति मते वन्हिमान् धूमादित्यादौ नाव्याप्तिः। परन्तु तद्रूपान्यत्वविशिष्टसत्तावान् रूपत्वादित्यादावतिव्याप्तिरेव स्याद्यदि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणाभावो मौलो न स्यात्।

## लक्ष्मीः

संभवेन नाऽसंभव इति।

न च प्रतियोगितावच्छेदकभेदेन प्रतियोगिताभेदे द्रव्यत्वत्वावच्छिन्नप्रतियोगिताया विशिष्टसत्तात्वावच्छिन्नप्रतियोगितातो भिन्नतया तत्प्रतियोगिताश्रयानधिकरणत्वस्य गुणादौ सत्वेन द्रव्यत्वाभावस्य लक्षणघटकतया प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशेपि नातिव्याप्तिः। एवं घटत्वावच्छिन्नप्रतियोगिताया घटवद्वृत्तित्वविशिष्टप्रमेयत्वावच्छिन्नप्रतियोगितातो भिन्नतया घटत्वावच्छिन्नप्रतियोगिताश्रयानधिकरणत्वस्य पर्वतादौ सत्वेन घटाभावस्य लक्षणघटकतया प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशेपि नाऽप्रसिद्धिनिबन्धनाऽसंभव इति वाच्यम्। प्रतियोगितावच्छेदकभेदेन प्रतियोगिताभेदे मानाभावात्।

अथ प्रतियोगितावच्छेदकभेदेन प्रतियोगिताभेद आवश्यकः। अन्यथा घटत्वादेः पटादिसाधारणप्रतियोगिताया न्यूनवृत्तित्वेनावच्छेदकत्वानुपपत्तेः। एवं च प्रतियोगितावच्छेदकभेदेन प्रतियोगिताभेदस्यावश्यकत्वे प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशेपि न विशिष्टसत्तादिसाध्यकेऽतिव्याप्तिरसंभवो वा।

अपि च प्रतियोगितायाः स्वरूपसंबन्धात्मकत्वे तन्निवेशनमफलमेव। न च पूर्वोपदर्शितरीत्या वह्निमान् धूमादित्यादावव्याप्तिवारणाय तन्निवेशनमिति वाच्यम्। मौलप्रतियोगिवैयधिकरण्ये तदनुपादाने इदमीये प्रतियोगिवैयधिकरण्येपि तदनुपादानेऽव्याप्तेरभावादित्यत आह। **परेत्विति। नाव्याप्तिरिति।** तादृशप्रतियोगिताश्रयो यथा महानसीयवह्निस्तथा पर्वतीयवह्निरपि तदनधिकरणत्वस्य पर्वते विरहादिति भावः। **रूपत्वादिति।** अत्र तद्रूपे व्यभिचारो बोध्यः। **अतिव्याप्तिरेवेति।** तद्रूपान्यत्वविशिष्टसत्ताभावस्य सत्तात्मकप्रतियोगिसमानाधिकरणत्वादिति शेषः। अतिव्याप्तिं संगमयति।

प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य घटत्वादेः सर्वस्यैव तद्रूपान्यत्वविशिष्टसत्तात्वावच्छिन्नसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वेन तादृश सत्तात्वस्य पारिभाषिकानवच्छेदकत्वादिति प्राहुः। तच्चिन्त्यम्।

## लक्ष्मीः

**प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावेति**। प्रतियोगिताश्रयानधिकरण-रूपत्ववत्तद्रूपनिष्ठघटाद्यभावेत्यर्थः। तद्रूपान्यत्वविशिष्टसत्ताभावस्तु गृहीतुं न शक्यते, हेतुमति तद्रूपे तद्रूपान्यत्वविशिष्टसत्ताभाव-प्रतियोगिताश्रय सत्ताधिकरणतासत्वादिति भावः। **तादृशसत्तात्वस्य**। तद्रूपान्यत्वविशिष्टसत्तात्वस्य। **पारिभाषिकानवच्छेदत्वादिति**। यत्प्र-तियोगित्वावच्छिन्नानधिकरणं हेत्वधिकरणं तत्प्रतियोगिताचच्छेदकधर्मो यद्धर्मविशिष्टसंबन्धिनिष्ठप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधि-करणाभावप्रतियोगितानवच्छेदक इत्यत्र यद्धर्मपदेन तद्रूपान्यत्वविशि-ष्टसत्वात्वस्य धर्तुमशक्यत्वादिति भावः। घटत्वादेर्यद्धर्मपदेनोपादाने तद्भिन्नत्वस्य साध्यतावच्छेदके सत्वादित्याशयः। अत्र रूपान्यत्ववि शिष्टसत्तायाः साध्यत्वे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं रूपान्यत्व-विशिष्टसत्तात्वं रूपान्यत्वविशिष्टसत्तासंबधि "रूपभिन्न" निष्ठाभाव-प्रतियोगितानवच्छेदकमिति रूपान्यत्वविशिष्टसत्तात्वस्य पारिभाषिका-वच्छेदकत्वेनाऽतिव्याप्त्यभावात्—तद्रूपान्यत्वेत्युक्तम्। तथा च हेतु-मति तद्रूपे तद्रूपान्यत्वविशिष्टसत्ताभावस्य प्रतियोगिताश्रयव्यधिकर-णत्वाभावाद्भावान्तरमादायाऽतिव्याप्तिरिति भावः। न च तद्रूपभेदा-भावस्यापि हेतुसमानाधिकरणतया तत्प्रतियोगितावच्छेदकतद्रूपभेद-त्वस्य तद्रूपान्यत्वविशिष्टसत्तासंबन्धिरूपान्तरनिष्ठाभावप्रतियोगितान-वच्छेकत्वात् यद्धर्मपदेन तादृशसत्तात्वस्यैव धर्तुं शक्यतया कुतोति-व्याप्तिरिति वाच्यम्। तद्रूपभेदस्य साध्यतावच्छेदक समवायेनाधिक-रणाप्रसिद्धेः। प्रकर्षसूचनाय प्राहुरित्युक्तम्। **अत्रापि लक्षणे**। द्वितीय-लक्षणे। धूमवान् वह्नेरित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदक-धूमत्वस्य कालिकेन वह्नित्वविशिष्टधूमवन्निष्ठाभावप्रतियोगितानवच्छेद-कतयाऽतिव्याप्तिरतो यद्यत्संबन्धेनेति वीप्सा। तथा च यद्य-त्संबन्धान्तर्गतसमवायेन वह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगिता-

इदन्त्ववधातव्यम्। अत्रापि लक्षणे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यत्संबन्धेन यादृशयादृशधर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तत्तत्संबन्धेन तादृशतादृशधर्मावच्छिन्नविशेष्यतान्यसाध्यतावच्छेदकताघटकसंबन्धावच्छिन्न विशेष्यतावच्छेदकत्वमेव साध्यतावच्छेदके द्रष्टव्यम्। नातः प्रागुक्तदोषाणामवकाशः। न वा महानसीयवन्हित्वादेः पारिभाषिकावच्छेदकतया तदन्यत्वस्य वन्हित्वादावसत्वेपि वन्हिमान् धूमादित्यादावव्याप्तिः, विशिष्टवन्हित्वाभिन्नस्यापि वन्हित्वस्य विशिष्टवन्हित्वावच्छिन्नविशेष्यतान्यविशेष्यतावच्छेदकत्वानपायात्।

## लक्ष्मीः

वच्छेदतया यद्धर्मपदेन धूमत्वस्यैव ग्रहणान्नातिव्याप्तिः। एवं यादृशयादृशेति वीप्सादरात्तादृशधूमत्वस्य महानसीयवह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वेपि नातिव्याप्तिः। यद्धर्मपदेन धूमत्वस्याप्युपादानसंभवात्। वस्तुतो यद्यद्धर्मविशिष्टेत्येव वक्तव्यम्। तथा च प्रतियोगिव्यधिकरणहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्यत्संबन्धेन यद्यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तत्तत्संबन्धावच्छिन्नतत्तद्धर्मनिष्ठावच्छेदकताकविशेष्यताभिन्ना या साध्यतावच्छेदकताघटकसंबन्धावच्छिन्नावच्छेदकताकविशेष्यता तदवच्छेदक साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति भावः। **प्रागुक्तदोषाणाम्।** असंभवादीनाम्। साध्यतावच्छेदकेतादृशतादृशधर्मभिन्नत्वं विहाय साध्यतावच्छेदकावच्छिन्नविशेष्यतायां तादृशतादृशधर्मावच्छिन्नविशेष्यताभेदनिवेशस्य फलमाह। **न वेति। महानसीयवन्हित्वादेरिति।** आदिना महानसीयतेजस्त्वस्य परिग्रहः। तेन महानसीयवन्ह्यभावस्य साध्यतावच्छेदकतदितरोभयानवच्छिन्नप्रतियोगिताकत्वविरहेण लक्षणाघटकत्वेपि न क्षतिः। **पारिभाषिकावच्छेदकतयेति।** महानसीयवन्हित्वस्य धूमवन्निष्ठाभावप्रतियोगितावच्छेदकमहानसीयवन्हित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतयेत्यर्थः। **तदन्यत्वस्य।** महानसीयवन्हित्वभेदस्य। **विशिष्टवन्हित्वाभिन्नस्यापि।** महानसीयत्वविशिष्टवन्हित्वाभिन्नस्यापि। **विशिष्टवन्हित्वावच्छिन्नविशेष्य-**

ननु कालो घटवान् महाकालत्वादित्यादावव्याप्तिः, गगनत्वादिविशिष्टस्य कालिकसंबन्धेन संबन्ध्यप्रसिद्ध्या पारिभाषिकावच्छेदकत्वासंभवात्। न च साध्यतावच्छेदकसंबन्धसामान्ये यादृशधर्मावच्छिन्नाभाववदनुयोगिकत्व-यद्धर्मविशिष्टप्रतियोगिकत्वोभयाभावस्तत्त्वं विवक्षितम्, तच्च गगनत्वादौ सुलभमिति वाच्यम्। तथा सति प्रमेयधूमवान् वन्हेरित्यादावतिव्याप्तेरित्युक्तत्वात्। धूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशोभयत्वापेक्षया प्रमेयधूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशोभयत्वस्य गुरुत्वेन तदवच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति चेत्।

## लक्ष्मीः

**तान्यविशेष्यतावच्छेदकत्वानपायादिति।** महानसीयवन्हित्वावच्छिन्नविशेष्यताभिन्नविशेष्यतावच्छेदकत्वसत्वादितिभावः। अथ वन्हित्वावच्छिन्नविशेष्यतायां कथं महानसीयवन्हित्वावच्छिन्नविशेष्यताभेदः, विशिष्टवन्हित्वस्य वन्हित्वानतिरेकादिति चेद् तादृशपारिभाषिकावच्छेदकतापर्याप्त्यनुयोगितावच्छेदकीभूतधर्मावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविशेष्यतान्यविशेष्यतावच्छेदकत्वस्य विवक्षितत्वात्। वन्हिमान् धूमादित्यादौ वन्हित्वावच्छिन्नविशेष्यतायां तादृशपारिभाषिकावच्छेदकताप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकं यन्महानसीयत्व वन्हित्व गतं द्वित्वं तदवच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविशेष्यतान्यत्वस्य सत्वात्। न च तादृशावच्छेदकत्वानिरूपकत्वमेव विशेष्यतायां निवेश्यताम्, किमवच्छेदकतानिरूपकविशेष्यतान्यत्वनिवेशेनेति वाच्यम्। निरूपकत्वस्याननुगतत्वादिति प्राहुः।

कालो घटवान् महाकालत्वादित्यत्र हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं गगनत्वं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमित्यत्र यद्धर्मपदेन गगनत्वस्योपादानं न संभवति, गगनत्वविशिष्टसंबन्ध्यप्रसिद्धेः। पटत्वादेरुपादाने तद्विशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकमेव गगनत्वमितिपटत्वादेरपि पारिभाषिकावच्छेदकत्वासंभवादव्याप्तिमाशंकते। **नन्विति। पारिभाषिकावच्छेदकत्वासंभवादिति। गगनत्वस्येत्यादिः।** गगनत्वस्य पटत्वादिविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वात्पटत्वादेरपि पारिभाषिकावच्छेदकत्वासंभवादित्यपि बोध्यम्। अव्याप्तिं

अत्र वदन्ति स्वविशिष्टप्रतियोगिकत्वानि विशिष्योपादाय साध्यतावच्छेदक-संबन्धसामान्ये हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकीभूततत्तद्धर्मावच्छिन्ना-

## लक्ष्मीः

निरसितुं शङ्कते । **न चेति । यादृशधर्मावच्छिन्नेति ।** हेतुमन्निष्ठा-भावप्रतियोगितावच्छेदकावच्छिन्नेत्यर्थः । **यद्धर्मेति ।** यत्पदं पारि भाषिकावच्छेदकपरम् । **तत्त्वं ।** पारिभाषिकावच्छेदकत्वम् । **तच्च ।** पारिभाषिकावच्छेदकत्वं च । **सुलभमिति ।** तथा च कालो घटवान् महाकालत्वादित्यादौ हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं गगनत्वं, कालिकसंबन्धसामान्ये गगनत्वावच्छिन्नाभाववदनुगिकत्वसत्वेपि गगनत्वविशिष्टप्रतियोगिकत्वविरहेणोभयाभावसत्वाद् गगनत्वस्य पारिभाषिकावच्छेदकत्वं सुलभमितिभाव । **तथासति ।** उक्तरीत्या-ऽव्याप्तिवारणे सति । धूमत्वविशिष्टप्रतियोगिकत्वघटिततादृशो-भयत्वापेक्षया । **प्रमेयधूमत्वविशिष्टप्रतियोगिकत्वघटिततादृ-शोभयत्वस्य ।** प्रमेयधूमत्वविशिष्टप्रतियोगिकत्व, प्रमेयधूमत्वाभाव-वदनुयोगिकत्वोभयत्वस्य । **तदवच्छिन्नप्रतियोगित्वाप्रसिद्धेरिति ।** तादृशोभयत्वावच्छिन्नप्रतियोगित्वाप्रसिद्धेरित्यर्थः । न च तादृशोभय-प्रतियोगिकाभाव एव निवेश्यतामिति वाच्यम् । तथा सति असंभवः, वह्नित्वावच्छिन्नप्रतियोगिकत्व, वह्नित्वावच्छिन्नाभाववदनुयोगिकत्वो-भयघटोभयाभावस्य संयोगसामान्ये सत्वात् । न च तथापि द्वित्वात्म-कोभयत्वशरीरे प्रमेयधूमत्वादेरप्रवेशेन कथं गुरुत्वमिति वाच्यम् । प्रकृते च संबन्धगत "प्रतियोगिकत्वाऽनुयोगिकत्वनिष्ठो" भयत्वस्य संख्यारूपत्वाऽसंभवेना ऽपेक्षाबुद्धिविशेषविपयत्वरूपतया यादृशधर्मा-वच्छिन्नाभाववदनुयोगिकत्व, यद्धर्मविशिष्टप्रतियोगिकत्वनिष्ठा "पेक्षाबु-द्धिविशेष" विषयत्वमेवोभयत्वम् , तथा च प्रमेयत्वविशिष्टप्रतियोगि-कत्व घटितोभयत्वस्य धूमत्वविशिष्टप्रतियोगिकत्वघटितोभयत्वापेक्षया गुरुत्वं बोध्यम् ।

**स्वविशिष्टेति ।** स्वं पारिभाषिकावच्छेदकत्वेनाभिमतम् । **विशिष्य ।** तत्तद्व्यक्तित्वादिना । एवं तदवच्छिन्नाभाववदनुयो-

भाववदनुयोगिकत्वस्य यद्धर्मविशिष्टप्रतियोगिकत्वव्यक्तीनां प्रत्येकस्य च द्वयोर्व्यतिरेकः स धर्मः पारिभाषिकावच्छेदकः। प्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वघटितोभयत्वस्य गुरुतया प्रतियोगितानवच्छेदकत्वेपि तत्तद्धर्मप्रतियोगिकत्वघटितोभया-

## लक्ष्मीः

गिकत्वानि विशिष्योपादायेत्यपि बोध्यम्। **द्वयोर्व्यतिरेक इति**। तथा च समवायनिष्ठघटत्वावच्छिन्नप्रतियोगिकत्व, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकावच्छिन्नाभाववदनुयोगिकत्वोभयाभावः, एवं संयोगादिनिष्ठघटत्वावच्छिन्नप्रतियोगिकत्व, तादृशप्रतियोगितावच्छेदकावच्छिन्नाभाववदनुयोगिकत्वोभयाभावस्तादृशाभावकूटवत्वं साध्यतावच्छेदकसंबन्धे निवेश्यम्। न तु तद्धर्मावच्छिन्नप्रतियोगिकत्वानि यावन्ति तत्प्रत्येकघटितोभयाभावः "तथा सति तद्धर्मावच्छिन्नप्रतियोगिकत्वद्वयाभावस्यापि ग्राह्यतापत्तेः" तथा च सति घटत्वावच्छिन्नप्रतियोगिकत्वयावदन्तर्गतसमवायनिष्ठघटत्वावच्छिन्नप्रतियोगिकत्वाप्रसिद्ध्या संयोगनिष्ठघटप्रतियोगिकत्वघटितोभयाभावस्याप्रसिद्धौ पारिभाषिकावच्छेदकाप्रसिद्धेः। कूटनिवेशेन वन्हित्वविशिष्टमहानसीयवन्हिप्रतियोगिकत्व, महासीयवन्हित्वावच्छिन्नाभाववदनुयोगिकत्वोभयाभावस्य संयोगसामान्ये सत्वेपि न वन्हित्वस्य पारिभाषिकावच्छेदकत्वमिति।

अथैवमपि कालो घटवान् महाकालत्वादित्यत्र पारिभाषिकावच्छेदकाप्रसिद्धिः, गगनत्वावच्छिन्नाभाववदनुयोगिकत्वघटितोभयाभावस्याऽप्रसिद्धेः,तादृशोभयत्वस्य महाकालानुयोगिकत्वगगनत्वावच्छिन्नप्रतियोगिकत्वापेक्षया गुरुत्वेनाऽनवच्छेदकत्वादिति चेन्न। दत्तोत्तरत्वात्। तथाहि तदवच्छिन्नाभाववदनुयोगिकत्वव्यक्तीनां प्रत्येकस्य यद्धर्मविशिष्टप्रतियोगिकत्वव्यक्तीनां प्रत्येकस्य चोभयाभावकूटवत्वं निवेशनीयम्। तथा च गगनाभाववदनुयोगिकत्वत्वेन तादृशानुयोगिकत्वसामान्यघटितोभयाभावस्याप्रसिद्धावपि गगनाभाववदनुयोगिकप्रत्येकान्तर्गतमहाकालानुयोगिकत्वगगनप्रतियोगिकत्वोभयाभावस्य प्रसिद्धत्वान्नहेतुदोषः। एवं च साध्यतावच्छेदकसंबन्धसामान्ये तदवच्छिन्नाभाववदनुयोगिकत्वत्वसमानाधिकरणोभयावृत्तिधर्म—यद्धर्मविशिष्टप्रतियोगिकत्वत्वसमानाधिकरणोभयावृत्तिधर्म—उभयत्वैतत्त्रितयधर्मावच्छिन्न-

भावकूटमादायैव नातिव्याप्तिः। कालो घटवान् महाकालत्वादित्यादौ च गगनत्वमेव तादृशावच्छेदकमादाय लक्षणसमन्वय इति।

वस्तुतस्तु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदको यो धर्मस्तदवच्छिन्नाभाववत्त्वावच्छेदेन साध्यतावच्छेदकसंबन्धावच्छिन्नसंबन्धितानिरूपितविशेषणतया यद्धर्मविशिष्टसंबन्धित्वसामान्याभावस्तत्त्वे, यद्धर्मे हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोग्यनधिकरणवृत्त्यधिकरणतावच्छेदकत्वसामान्यस्य प्रकृतसाध्याधिकरणतावच्छेदकत्वनिरूपितस्वरूपसंबन्धेनाभावस्तत्त्वे वा स्वविशिष्टसंबन्धीत्यादिनिरुक्तेस्तात्पर्याद्, गगनत्वादौ सहजतः पारिभाषिकावच्छेदकत्वं सुलभमिति ध्येयम्।

## लक्ष्मीः

प्रतियोगिताकाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्त्वं साध्यतावच्छेदकसंबन्धसामान्ये निवेशनीयम्। तद्व्यक्तिएतद्व्यक्तिउभयं नास्तीति प्रतीतिसाक्षिकोऽभावो ग्राह्यः। तादृशानुयोगिकत्वत्वयद्धर्मविशिष्टप्रतियोगिकत्वत्वोभयमेव द्वित्वस्य परिचायकं नत्ववच्छेदकं, तादृशद्वित्वव्यक्त्यवच्छिन्नाभावकूटस्यैव प्रवेशात् तद्व्यक्तेः स्वरूपतो भानोपगमान्नदोषः कोपि। **स धर्मः पारिभाषिकावच्छेदक** इति।

तथा च वह्निमान् धूमादित्यादौ संयोगसामान्ये एव तादृशप्रतियोगितावच्छेदकघटत्वावच्छिन्नाभाववत्पर्वतानुयोगिकत्वसत्त्वेपि घटत्वावच्छिन्नप्रतियोगिकत्वविरहेण यद्धर्मपदेन घटत्वस्योपादानात्पारिभाषिकावच्छेकत्वम्, न तु वह्नित्वस्य तथात्वं, संयोगसामान्ये वह्नित्वावच्छिन्नप्रतियोगिकत्व, पर्वतानुयोगिकत्वोभयोः सत्वात्। **तत्तद्धर्मेति**। प्रमेयधूमत्वावच्छिन्नेत्यर्थः। **कूटमादायैवेति**। एवकारेणोभयत्वावच्छिन्नप्रतियोगिताकत्वस्य व्यावृत्तिः। **नातिव्याप्तिरिति**। संयोगसामान्ये एव प्रमेयधूमत्वावच्छिन्नप्रतियोगिकत्वसत्वेपि हेत्वधिकरणायोगोलकानुयोगिकत्वविरहाद्यद्धर्मपदेन प्रमेयधूमत्वमादाय नातिव्याप्तिरिति भावः। **तादृशावच्छेदकमिति**। कालिकसंबन्धसामान्ये तादृशप्रतियोगितावच्छेदकगगनत्वावच्छिन्नाभाववन्महाकालानुयोगिकत्वसत्वेपि तादात्म्ये प्रसिद्धस्य गगनत्वावच्छिन्नप्रतियोगिकत्वविहाद् गगनत्वमेव पारिभाषिकावच्छेदकमित्यर्थः। वदन्तीत्यस्वरसः—तद्बीजं तु एतादृशनिवेशे "तदवच्छिन्नाभाववदसंबद्धे"

केचित्तु तादात्म्यसाध्यतावच्छेदकान्यतरसंबन्धेन यः स्वविशिष्टसंबन्धी तन्निष्ठो-यस्तदन्यतरसंबन्धेन प्रतियोगिव्यधिकरणोऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वमुक्त-लक्षणार्थः ।

## लक्ष्मीः

त्यादिपूर्वकल्पस्यापि निर्दोषत्वसंभवे व्यर्थं कल्पान्तरानुसरणमिति ध्येयम् ।

प्रकारान्तरेण कालो घटवान् महाकालत्वादित्यत्राऽव्याप्तिं वारयतां केषाञ्चिन्मतमुपन्यस्य दूषयति । **केचित्तु इति । स्वविशिष्टेति ।** स्वं पारिभाषिकावच्छेदकत्वेनाभिमतम् । **तन्निष्ठो यः ।** तादृशान्यतरसंबन्धेन संबन्धिनिष्ठो यः । **तदन्यतरसंबन्धेन ।** तादात्म्यसाध्यतावच्छेदकान्यतरसंबन्धेन । **तत्प्रतियोगितानवच्छेदकतत्कत्वमिति ।** स्वविशिष्टसंबन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकं - प्रतियोगितावच्छेदकं यस्य एवं भूतं यत्स्वं, तत्त्वं पारिभाषिकावच्छेदकत्वमित्यर्थः । तथा च हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकं तादृशान्यतरसंबन्धेन स्वविशिष्टसंबन्धिनिष्ठतादृशान्यतरसंबन्धेन प्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकं यद्यत्स्वं तत्तद्भेदकूटवत्वं साध्यतावच्छेदके निवेश्यमिति भावः । वन्हिमान् धूमादित्यादौ धूमवन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितावच्छेदकं घटत्वं, यद्धर्मपदेन घटत्वमुपादाय तादृशान्यतरसंबन्धेन घटत्वविशिष्टसंबन्धी घटो घटवद्भूतलञ्च तन्निष्ठो यस्तादृशान्यतरसंबन्धेन प्रतियोगिव्यधिकरणाभावो न घटाभावः किन्तु पटाभावादिस्तत्प्रतियोगितानवच्छेदकमपि घटत्वं तदन्यत्वस्य वन्हित्वे सत्वाल्लक्षणसमन्वयः । स्वपदेन वन्हित्वन्तु न गृहीतुं शक्यते तद्विशिष्टसंबन्धिनि वन्हौ पर्वतादौ च वर्तमानस्य घटाभावस्य प्रतियोगितावच्छेदकताया एव घटत्वे सत्वात् । धूमवान् वन्हेरित्यादावतिव्याप्तिवारणाय भेदकूटनिवेशः । अन्यथा वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकीभूत धूमत्वस्य स्वपदग्राह्य महानसीयधूमनिष्ठतद्व्यक्तित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतया तद्व्यक्तित्वभिन्नत्वस्य धूमत्वे सत्वात् । तन्निवेशेतु यावदन्तर्गतस्वपदेन धूमत्वस्यापि धर्तुं शक्यतया

तथा च तादृशान्यतरसंबन्धेन गगनत्वविशिष्टसंबन्धिनि आकाशे वर्तमानो-गगनाभावो नैतादृशान्यतरसंबन्धेन प्रतियोगिव्यधिकरणः, तस्य तादात्म्येन प्रति-योगिसमानाधिकरणत्वात्, किन्तुघटाभाव एव तथेति तत्प्रतियोगितानवच्छेदकमेव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतं गगनत्वमिति तदादायैव कालोघटवान् महा-कालत्वादित्यादौलक्षणसंगतिः ।

## लक्ष्मीः

नातिव्याप्तिरितिभावः । **तथा च** । तादात्म्यसाध्यतावच्छेदकान्यतर-संबन्धेन स्वविशिष्टसंबन्धित्वनिवेशे च । **तस्य** । गगनाभावस्य । **तथा** । प्रतियोगिव्यधिकरणः । स्वपदग्राह्यगगनत्वविशिष्टसंबन्धिनि गगने घटत्वावच्छिन्नासंबन्धित्वस्य सत्वादिति भावः । **तत्प्रतियो-गितेति** । घटाभावप्रतियोगितेत्यर्थः । **तदादायैव** । गगनत्वमा-दायैव ।

तादात्म्यसंबन्धनिवेशाद् घटवान् महाकालत्वादित्यादौ गगनत्व-विशिष्टस्य कालिकसंबन्धेन संबन्ध्यप्रसिद्ध्या स्वदाग्राह्यतया न पारि-भाषिकावच्छेदकत्वाप्रसिद्धिनिबन्धनाव्याप्तिः ।

तादात्म्यमात्रेण स्वविशिष्टसंबन्धित्वनिवेशे प्रतियोगिवैयधिकरण्य निवेशे च द्रव्यं पृथिवीत्वादित्यादौ अव्याप्तिः, जलवृत्तित्वविशिष्टद्रव्य त्वाभावस्य प्रतियोगितावच्छेदकं विशिष्टद्रव्यत्वत्वं तस्य स्वपदग्राह्य-द्रव्यत्वत्वविशिष्टस्य तादात्म्येन संबन्धि द्रव्यत्वं तन्निष्ठस्य तादात्म्येन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकत्वात् । एवं तादा-त्म्येन स्वविशिष्टसंबन्धिनिष्ठो यस्तादृशान्यतरसंबन्धेन प्रतियोगिव्यधि-करणोऽभावस्तत्प्रतियोगितानवच्छेदकतत्कत्वविवक्षणेऽपि तद्दोषतादव-स्थ्यम् ।

एवं तादृशान्यतरसंबन्धेन स्वविशिष्टसंबन्धित्वं केवलतादात्म्येन प्रतियोगिवैयधिकरण्यनिवेशे धूमवान् वह्नेरित्यादावतिव्याप्तिः, वह्निस-मानाधिकरणाभावप्रतियोगितावच्छेदकधूमत्वस्य तादृशान्यतरसंबन्धेन स्वपदग्राह्यधूमत्वविशिष्टसंबन्धिनि पर्वतादौ वर्तमानस्य तादात्म्येन प्रतियोगिव्यधिकरणधूमाभावस्य प्रतियोगितावच्छेदकत्वेन पारिभाषि-कावच्छेदकभिन्नत्वस्य धूमत्वे सत्वात् । वस्तुतो द्रव्यत्वाभाववान्

न चैवं धूमगगनाभावान्यतरस्य संयोगेन साध्यत्वे वन्ह्यादावतिव्याप्तिः, तादृशान्यतरत्वापेक्षया लघुत्वेन धूमत्वस्यैव हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वात् , तस्य च संयोगतादात्म्यान्यतरसंबन्धेन तादृशान्यतरत्वविशिष्टस्यसंबन्धी गगनाभाववन्निष्ठस्य तादात्म्यसंयोगान्यतरसंबन्धेन प्रतियोगिव्यधिकरणस्य धूमाभावस्य प्रतियोगितावच्छेदकतया धूमगगनाभावान्यतरत्वस्य पारिभाषिकावच्छेदकत्वविरहादिति वाच्यम् ।

## लक्ष्मी

सत्वादित्यत्रातिव्याप्तिः, सत्तावद्द्रव्यवृत्त्यभावप्रतियोगितावच्छेदकद्रव्यत्वाभावत्वस्य तादृशान्यतरसंबन्धेन स्वपदग्राह्यद्रव्यत्वाभावत्वविशिष्टसंबन्धिगुणादिनिष्ठस्य तादात्म्येन प्रतियोगिव्यधिकरणद्रव्यत्वाभावभेदप्रतियोगितावच्छेदकत्वेन पारिभाषिकावच्छेदकभिन्नत्वात् । सत्तावद्द्रव्यवृत्त्यभावप्रतियोगितावच्छेदकद्रव्यावृत्तित्वस्य तादृशान्यतरसंबन्धेन द्रव्यत्वाभावत्वविशिष्टसंबन्धिगगनाभावनिष्ठस्य तादात्म्येन प्रतियोगिव्यधिकरणद्रव्यावृत्त्यभावप्रतियोगितावच्छेदकत्वात् । अत उभयत्रान्यतरसंबन्धानुधावनम् । एतेन धूमधूमवदन्यतराभावमादायधूमवान् वह्नेरित्यादौ नातिव्याप्तिरिति निरस्तम् । द्रव्यत्वाभाव—द्रव्यत्वाभाववदन्यत्वस्य स्वरूपेण केवलान्वयितया प्रतियोगिवैयधिकरण्यविरहेण लक्षणाघटकत्वादिति ध्येयम् । अथाऽन्यतरत्वं भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्वम् । "स्ववृत्तिभेदप्रतियोगितावच्छेदकद्वित्ववद्भेदप्रतियोगित्वं वा" । तथा च तादात्म्येन साध्यतास्थले भेदद्वयाप्रसिद्ध्या तादृशान्यतरत्वस्याप्रसिद्धिरिति चेन्न । तत्रापि तादात्म्यं नेति भेदस्य साध्यतानिरूपित किंचित्संबन्धानवच्छिन्नावच्छेदकताकान्नेतिभेदस्य च प्रसिद्धत्वात् । अथ वा तादात्म्यावृत्तित्वे सति साध्यताघटकसंबन्धावृत्तिर्यो धर्मस्तच्छून्यत्वं तत् । तादात्म्यावृत्तित्वे सति साध्यताघटकसंबन्धावृत्तियद्यत्तत्तद्भावकूटवत्वमिति यावत् ।

**नचेति** । **एवं** । तादात्म्यसाध्यतावच्छेदकान्यतरसंबन्धेन स्वविशिष्टसंबन्धित्व निवेशे । **धूमत्वस्यैवेति** । एवकारेण धूमगगनाभावान्यतरत्वस्य व्यावृत्तिः । **तस्य च** । धूमत्वस्य च । **तदन्यतरत्व-**

धूमगगनाभावान्यतरत्वस्याप्यखण्डस्य धूमत्वतुल्यतया तस्यैव हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकस्य स्वविशिष्टसंबन्धिनि तादृशसंबन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकतया पारिभाषिकावच्छेदकत्वेनातिव्याप्तिविरहादिति प्राहुः।

## लक्ष्मीः

**विशिष्टस्य।** धूमगगनाभावान्यतरत्वविशिष्टस्य। **तन्निष्ठस्य।** गगनाभावनिष्ठस्य। **पारिभाषिकावच्छेदकत्वविरहादिति।** स्वपदाग्राह्यत्वादिति भावः। धूमत्वस्य स्वपदग्राह्यत्वेन तद्भिन्नत्वस्य साध्यतावच्छेदकीभूततादृशान्यतरत्वे सत्वादतिव्याप्तिरिति भावः।

अथ हेतुसमानाधिकरणतादृशान्यतरात्यन्ताभावमादायाऽतिव्याप्तिसत्त्वेपि धूमगगनाभावान्यतरभेदमादाय नातिव्याप्तिः, तथा हि हेतुसमानाधिकरणतादृशान्यतरभेदप्रतियोगितावच्छेदकान्यतरत्वे तादृशान्यतरसंबन्धेन स्वपदग्राह्य तादृशान्यतरत्वविशिष्टसंबन्धि गगनाभावनिष्ठस्यान्यतरसंबन्धेन प्रतियोगिव्यधिकरणाभावस्य प्रतियोगितानवच्छेदकत्वेनान्यतरत्वस्य पारिभाषिकावच्छेदकत्वात्। न च तादृशान्यतरत्वं न भेदस्यापि प्रतियोगितावच्छेदकं, लघुतयाधूमत्वस्यैव तथात्वादिति वाच्यम्। गगनाभावे तादृशान्यतरभेदस्य प्रत्ययप्रसंगात्, धूमत्वावच्छिन्नाभावस्य तत्र सत्वादिति चेन्न। धूमत्वप्रकारकप्रमाविशेष्यत्व—प्रमेयत्वैतदन्यतरविशिष्टस्य धूमप्रतियोगिकसंयोगेन साध्यतायां वन्ह्यादिहेतावतिव्याप्तौ तात्पर्यात्। तादृशान्यतरत्वविशिष्टाभावीय प्रतियोगितावच्छेदकं लाघवाद् धूमत्वमेवनतुतादृशान्यतरत्वं,तादृशान्यतरत्वविशिष्टभेदाऽप्रसिद्धेः। न चैवं सति अन्यतरत्वस्याऽखण्डस्येति ग्रन्थविरोध इति वाच्यम्। उक्तग्रन्थस्याऽन्यतरत्वस्याऽभावात्मकतयाऽभावस्य स्वरूपतोऽवच्छेदकत्वमित्याशयात्। तथा चात्र गगनाभावमादायैव नातिव्याप्तिरिति भावः।

अन्यतरत्वमखण्डोपाधिस्तथा च तस्य धूमत्ववत्प्रतियोगितावच्छेदकत्वान्नोक्तातिव्याप्तिरित्याह। **धूमगगनाभावान्यतरत्वस्येति।** **अखण्डस्य।** निरवच्छिन्नप्रकारताश्रयस्य। **तस्यैव।** धूमगगना-

अत एव सत्तावान् जातेरित्यादौ जातिमन्निष्ठाभावप्रतियोगितावच्छेदकगुणान्यत्वविशिष्टसत्तात्वतुल्यवृत्तिकत्वेपि सत्तात्वस्य न क्षतिः ।

तन्मन्दम् । रूपवान् घटत्वादित्यादावव्याप्तिप्रसङ्गात् । हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकं यद्रूपत्व द्रव्यान्यतरत्वं तस्य तादृशसंबन्धेन रूपत्वविशिष्टसवन्धिनिष्ठतादृशसंवन्धावच्छिन्नप्रतियोगिव्यधिकरणाभावप्रतियोगितान - वच्छेदकत्वेन रूपत्वस्य पारिभाषिकावच्छेदकत्वात् । तथा हि—तादात्म्यसमवायान्यतरसंबन्धेन यद्रूपत्वविशिष्टस्य संवन्धि रूपं पृथिव्यादिकं च तत्र तादात्म्यसमवायान्यतरसंवन्धेन प्रतियोगिव्यधिकरणो न रूपत्वद्रव्यान्यतराभावः, समवायेन रूपे रूपत्वाख्यप्रतियोगिनः—तादात्म्येन च पृथिव्यादौ द्रव्यात्मकप्रतियोगिनः सत्वात्, किन्तु रूपत्वविशिष्टस्य तथाविधसंबन्धिनिष्ठो यः पटाद्यभावः स एव प्रतियोगिव्यधिकरण इति रूपत्वद्रव्यान्यतरत्वे प्रतियोगितानवच्छेदकत्वध्रौव्यम् ।

## लक्ष्मीः

भावान्यतरत्वस्यैव । **स्वविशिष्टेति** । स्वं—तादृशान्यतरत्वम् । **नैषदोष इति** । रूपत्वद्रव्यान्यतराभावस्य तादात्म्येन द्रव्यात्मकप्रतियोगिसमानाधिकरणत्वात् । **अतिप्रसंगादिति** । घटत्वे समवायेन घटत्वाभावस्याऽन्यतरसंबन्धान्तर्गततादात्म्येन प्रतियोगिसमानाधिकरणत्वात् ।

प्रतियोगितावच्छेदकाऽनतिरिक्तवृत्तित्वकल्पेऽरुचिं प्रकाशयति । **दीधितौ । अतएवेति । तुल्यवृत्तिकत्वेपीति** । अत्रापि शब्दस्याऽभ्युपगमोर्थः सत्तात्वतुल्यवृत्तिकत्वाभ्युपगमे इति यावत । तेन द्वित्वादिवद्विशिष्टधर्मस्यापि विशेष्य विशेषण संबन्धेषु पर्याप्तत्व स्वीकारे सत्तात्वस्य विशेष्यमात्र पर्याप्ततया विशिष्टसत्तात्वस्य विशेष्यविशेषणसंबन्धेषु पर्याप्ततया विशिष्टसत्तात्वे विशेष्यमात्रपर्याप्तसत्तात्वपर्याप्त्यधिकरणपर्याप्तवृत्तिकत्वाभावेनाऽनतिरिक्तवृत्तित्वकल्पेपि नाव्याप्तिरिति सूचितम् ।

**दीधितौ । सत्तात्वस्य विशिष्टसत्तात्वतुल्यवृत्तिकत्वेपीति ।**

एवं स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदका-वच्छेद्यत्वं बोध्यम् ।

न च हेतुसमानाधिकरणाभावस्यापि तादृशान्यतरसंबन्धेन प्रतियोगिवैयधिकरण्यस्य निवेशान्नैष दोष इति वाच्यम् । तथा सति समवायेन घटत्वस्य प्रमेयस्य वा साध्यत्वे तादात्म्येन हेतौ घटत्वे प्रमेये वातिप्रसङ्गादिति दिक् । अत एवेति । वस्तुतस्तु इत्यादिकल्पस्यादृतत्वादेवेत्यर्थः । यथाश्रुताऽनतिरिक्तवृत्तित्वस्यादरे तु सत्तावान् जातेरित्यादावव्याप्तिः स्यादेवेति भावः ।

जातिमन्निष्ठाभावप्रतियोगितायां सत्तात्वान्यूनवृत्तिविशिष्टसत्तात्वावच्छेद्यत्व—समवायसंबन्धावच्छेद्यत्वोभयसत्वादवच्छेद्यताघटितलक्षणस्यापि प्रागुक्तस्य सत्तावान् जातेरित्यादावव्याप्तिरतस्तदपि परिष्करोति । एवमिति । स्वं साध्यतावच्छेदकम् ।

## लक्ष्मीः

सत्तात्वस्य विशिष्टसत्तात्वानतिरिक्तत्वेपीत्यर्थः । अव्याप्तिःस्यादेवेति । जातिमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतविशिष्टसत्तात्वाभाववदवृत्तित्वात्सत्तात्वस्येति भावः । अथ विशिष्टस्याऽनतिरिक्तत्वमते हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्विशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं तद्भिन्नं साध्यतावच्छेदकमिति कल्पे सत्तावान् जातेरित्यादावव्याप्तिस्तदवस्थैव, विशिष्टसत्तात्वस्य पारिभाषिकावच्छेदकतया सत्तात्वस्य तद्भिन्नत्वाभावात् । अत्रास्मद्परमगुरवः । तद्भिन्नत्वमपहाय तदघटितं यत्साध्यतावच्छेदकमिति वक्तव्यम् । तदघटितत्वं तदविषयक प्रतीति विषयत्वम् । भवति च सत्तात्वं विशिष्टसत्तात्वाविषयकप्रतीति विषयः । तादृशपारिभाषिकावच्छेदकता येन रूपेण तेन रूपेण तदविषयकत्वं वाच्यम् । अन्यथा सत्तात्व विषयकप्रतीतेः सत्तात्वाभिन्नविशिष्टसत्तात्वविषयकत्वेन सत्तात्वे विशिष्टसत्तात्वाविषयकप्रतीतिविषयत्वस्यानिर्वाहादिति प्राहुः ।

प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे यद्धर्मावच्छिन्नत्वाऽप्रसिद्ध्या गुरुरूपेण साध्यतायामव्याप्तिमपाकर्तुं यद्धर्मावच्छिन्नत्वमित्यनेन यद्धर्मान्यूनवृत्तिधर्मावच्छिन्नत्वमिति वक्तव्यम्, एवमपि सत्तावान जातेरित्यादावव्याप्तिमाह । जातिमन्निष्ठेति । जातिमद्गुणनिष्ठे-

अत्र स्ववैशिष्ट्यं साध्यतावच्छेदकताघटकसबन्धेनैव ग्राह्यम्, तेन धूमत्वादीनां कालिकादिसबन्धेन धूमत्वादिविशिष्टस्य वन्ह्यादेःसंयोगिनि वर्तमानस्याभावस्य प्रतियोगितावच्छेदकत्वेपि धूमवान् वन्हेरित्यादौ नातिव्याप्तिः। स्वविशिष्टस्य संबन्धित्वं साध्यतावच्छेदकसबन्धेन बोध्यम्, तेन धूमत्वाद्यवच्छिन्नप्रतियोगितायां धूमत्वविशिष्टस्य कालिकादिसबन्धेन यत्सबन्धि तन्निष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वविरहेपि धूमवान् वन्हेरित्यादौ नातिव्याप्तिः।

## लक्ष्मीः

त्यर्थः। **तदपि**। अवच्छेद्यताघटितलक्षणमपि। **एवमिति**। पारिभाषिकावच्छेदकत्वानुसरणे इत्यर्थः। पूर्वलक्षणयोः स्वशब्दस्य पारिभाषिकावच्छेदकपरतया अत्र तत्परत्वशंकानिरासार्थमाह। **स्वं— साध्यतावच्छेदकमिति**। तथा च स्वप्रतियोगितावच्छेदकावच्छिन्नानधिकरण हेतुमद्वृत्त्यभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व, यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वोभयाभावस्तेन संबन्धेन तद्धर्मावच्छिन्नस्य व्यापकत्वं बोध्यम्। व्यापकसामानाधिकरण्यं व्याप्तिः। **दीधितौ**। **बोध्यमिति**। यद्धर्मावच्छिन्नत्वमित्यनेनेत्यादिः। प्रमेयवह्निमान्धूमादित्यादौ हेतुसमानाधिकरणघटाभावप्रतियोगितायां संयोगसंबन्धावच्छिन्नत्वसत्वेपि प्रमेयवह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकीभूतवह्नित्वावच्छिन्नत्वविरहान्नाव्याप्तिः। अत्रविशिष्टसत्तावान् जातेरित्यादौ जातिमन्निष्ठविशिष्टसत्ताभावप्रतियोगितासामान्ये विशिष्टसत्तात्वाश्रयीभूतसत्तासंबन्धिगुणादिनिष्ठाभावप्रतियोगितानवच्छेदकसत्तात्वावच्छेद्यत्वाभावसत्वादतिव्याप्तिरतः। **स्वविशिष्टेति**। साध्यतावच्छेदकावच्छिन्नेति तदर्थः। **अत्र**। लक्षणे। घटकत्वंसप्तम्यर्थः। तस्य वैशिष्टेऽन्वयः। **तेन**। साध्यतावच्छेदकताघटकसंबन्धेन स्ववैशिष्ट्यविवक्षणेन। **धूमत्वादीनामिति**। अस्य प्रतियोगितावच्छेदकत्वेपीत्यनेन संबन्धः। **संयोगिनि**। अयोगोलके। **अभावस्य**। धूमाभावस्य। **प्रतियोगितावच्छेदकत्वेपीति**। प्रतियोगितानवच्छेदकं द्रव्यत्वं तदवच्छेद्यत्वाभावस्यवह्निमन्निष्ठाभाव प्रतियोगितायां सत्वेपीति भावः। **तेन**। संबन्धितायां साध्यतावच्छेदक-

न च सामान्यतो धूमसंबन्धिनि संयोगेन सर्वस्यैवाभावसत्वाद् धूमवन्निष्ठ-संयोगसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकाप्रसिद्धया कथमतिव्याप्तिरिति वाच्यम् । गोत्वत्व–घटाभावत्वादेरेव तत्प्रसिद्धेः । संयोगसंबन्धावच्छिन्नगोत्वाद्यभावप्रति-योगिताया लाघवेन गवेतरासमवेतत्वादिभिरेवावच्छेदात् ।

न चैवमपि तदवच्छेद्यत्वाप्रसिद्ध्यैव नातिव्याप्तिः । गोत्वादिभेदप्रतियो-

## लक्ष्मीः

संबन्धावच्छिन्नत्वनिवेशेन । **धूमत्वाद्यवच्छिन्नप्रतियोगितायां ।** वह्निमन्निष्ठाभावीयेत्यादिः । **संबन्धि ।** जलादिकं । तन्निष्ठाभावप्रति-योगितानवच्छेदकं द्रव्यत्वं तदवच्छेद्यत्वविरहेपीत्यर्थः । ननु विषयितया वह्नेः साध्यत्वे तद्ज्ञानत्वहेतौ अव्याप्तिसंभवेऽतिव्याप्तिदान-मसंगतम्, समवायेन वह्नित्वविशिष्टसंबन्धिनिष्ठो यः विषयितासंबन्धा-वच्छिन्नप्रतियोगिताकोऽभावस्तत्प्रतियोगितावच्छेदकत्वस्य पदार्थमात्रे सत्वेनाऽनवच्छेदकत्वाप्रसिद्धेरिति चेन्न । तादात्म्यातिरिक्तवृत्त्यनिया-मक संबन्धेन व्याप्यव्यापकभावानंगीकारेणाव्याप्त्यभावात् । शंकते । **नचेति । सर्वस्यैवाभावसत्वादिति ।** संयोगस्याव्याप्यवृत्तित्वादिति भावः । **प्रतियोगितानवच्छेदकाऽप्रसिद्ध्येति ।** अप्रसिद्धिश्च प्रतियोगि वैयधिकरण्यस्याऽनिवेशाभिप्रायेण । अन्यथा ज्ञानत्वे तत्सौलभ्यात्, संयोगेन ज्ञानाधिकरणाऽप्रसिद्धेः । समाधत्ते । **गोत्वत्वघटाभावत्वा-देरेवेति । तत्प्रसिद्धेरिति ।** सामान्यतो धूमवन्निष्ठसंयोगसंबन्धाव-च्छिन्नप्रतियोगितानवच्छेदकत्वप्रसिद्धेरित्यर्थः । प्रसिद्धौ हेतुमाह **संयोगसंबन्धावच्छिन्नगोत्वाद्यभावेति ।** आदिना संयोगसंबन्धाव-च्छिन्न घटाभावनिष्ठप्रतियोगिताकाभावस्य परिग्रहः । **गवेतरासमवेत-त्वादिभिरिति ।** आदिनाऽभावत्वस्य परिग्रहः । तथा च गोत्वत्वापेक्ष-या गवेतरासमवेतत्वस्य घटाभावत्वापेक्षया अभावत्वस्य गोत्वघटाभा-वयोरभावप्रतियोगितावच्छेदकत्वे लाघवादिति भावः । एवकारेण गवेतरासमवेतत्वे सति सकलगोसमवेतत्वस्य घटप्रतियोगिकाभाव-त्वयोः व्यावृत्तिः । **अवच्छेदात् ।** अवच्छिन्नत्वात् । **एवमपि ।** गोत्वत्वादौ साध्यवन्निष्ठसंयोगसंबन्धावच्छिन्नप्रतियोगितानवच्छेदक-

गितायां तत्सौलभ्यात् । न हि सापि गवेतरासमवेतत्वमात्रावच्छिन्ना, गोरूपादौ गोत्वभेदासत्वप्रसंगात् ।

यदि च गोत्वत्वावच्छेद्यत्व, संयोगसंबन्धावच्छेद्यत्वोभयत्वावच्छिन्नाभावाप्रसिद्ध्यैव नातिव्याप्तिः, गवेतरासमवेतत्वावच्छेद्यत्वमात्रघटिततादृशोभयत्वस्यैव लघुत्वेन प्रतियोगितावच्छेदकत्वादिति विभाव्यते,

## लक्ष्मीः

त्वस्य प्रसिद्धावपि । **तदवच्छेद्यत्वाप्रसिद्ध्यैव** । गोत्वत्वावच्छेद्यत्वाप्रसिद्ध्यैव । समाधत्ते । **गोत्वादिभेदप्रतियोगितायामिति ।** गोत्वं नेति भेदीयप्रतियोगितायामित्यर्थः । **तत्सौलभ्यात्** । गोत्वत्वावच्छिन्नत्वस्य सुलभत्वात् । **सापि** । गोत्वादिभेदप्रतियोगितापि । **गोत्वभेदाऽसत्वप्रसंगादिति** । गवेतरासमवेतत्वस्य गोरूपे सत्वात्, भेदस्य स्वप्रतियोगितावच्छेदकेन सह विरोधादितिभावः । अत एव प्रमेयधूमत्वमुपेक्षितम् तदवच्छिन्नत्वस्य भेदीयप्रतियोगितायामप्यसत्वात् । न च घटाभावत्वादेरपि संयोगसंबन्धावच्छिन्नघटाभावनिष्ठप्रतियोगिताकाभावप्रतियोगितावच्छेदकत्वमस्त्येवेति वाच्यम् । लाघवेनाभावत्वेनैवावच्छेदात् । नचाभावत्वस्य घटाभावनिष्ठप्रतियोगितातिप्रसक्तत्वेन कथमवच्छेदकत्वमिति वाच्यम् । संयोगेनाभावाभावस्य घटाभावाभावसमनैयत्येनाभावमात्रस्यैव संयोगावच्छिन्नघटाभावाभावप्रतियोगिताश्रयत्वेनातिप्रसक्त्यभावादिति । तादात्म्यसंबन्धावच्छिन्नत्व गोत्वत्वावच्छिन्नत्वोभयत्वावच्छिन्नस्य प्रसिद्धावपि शंकते । **यदिचेति । उभयत्वावच्छिन्नाभावाप्रसिध्यैवेति ।** न च निरुक्तोभयनिष्ठप्रतियोगिताकाभाव एव निवेश्यतामिति वाच्यम् । तथा सति साध्यतावच्छेदकसंबन्धेन साध्यसंबन्धित्वनिवेशेपि व्यभिचारिमात्रेऽतिव्याप्तिः, हेतुमन्निष्ठसाध्याभावप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्व, साध्यतावच्छेदकावच्छिन्नत्व, घटैतत्त्रितयाभावसत्वात् । अप्रसिद्धौ हेतुमाह । **गवेतरासमवेतत्वाद्यवच्छेद्यत्वमात्रघटितस्यैवेति ।** एवकारेण गोत्वत्वावच्छिन्नत्वस्य व्यावृत्तिः । **तादृशोभयत्वस्य ।** संयोगसंबन्धावच्छिन्नत्व, गवेतरासमवेतत्वाव-

तदोक्तरीत्या वन्हिमान् धूमादित्यादावव्याप्तिवारणार्थमेव साध्यतावच्छेदकसंबन्धेन स्वविशिष्टसंबन्धित्वं निवेश्यम् ।

इत्थं च निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये एव साध्यवन्निष्ठाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतगोत्वत्वावच्छेद्यत्व - संयोगसंबन्धावच्छेद्यत्वोभयत्वावच्छिन्नाभावसत्त्वाद् धूमवान् वन्हेरित्यत्रैवातिव्याप्तिः, गुरुतयोक्तक्रमेण तादृशोभयत्वावच्छिन्नाभावाप्रसिद्ध्या वन्हिमान् धूमादित्यादावव्याप्तिर्वा स्यादतः प्रतियोग्यसंबन्धित्वेनापि स्वविशिष्टसंबन्धी विशेषणीयः ।

तदर्थश्च प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नासंबन्धित्वम् । तेन संबन्धसामान्येन यः प्रतियोगितावच्छेदकावच्छिन्नासंबन्धी वन्हित्वविशिष्ट-

## लक्ष्मीः

च्छिन्नत्वोभयत्वस्य । **प्रतियोगितावच्छेदकत्वादिति** । तथा च गोत्वत्वावच्छेद्यत्वघटिततादृशोभयत्वावच्छिन्नाभावाऽप्रसिद्ध्या नातिव्याप्तिरिति भावः । साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशं सार्थकयति । **तदेति** । **उक्तरीत्या** । सामान्यतो वन्हित्वविशिष्टसंबन्धिनिष्ठसंयोगसंबन्धावच्छिन्नाभावीयप्रतियोगितानवच्छेदकगोत्वत्वावच्छिन्नत्व, संयोगसंबन्धावच्छिन्नत्वोभयत्वावच्छिन्नाभावाऽप्रसिद्ध्या । **इत्थं च** । संयोगसंबन्धावच्छिन्नगोत्वाभावीयप्रतियोगितानवच्छेदकत्वस्य गोत्वत्वे सत्वे च । **निरुक्तेति** । प्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नेत्यर्थः । **प्रतियोगितानवच्छेदकीभूतगोत्वत्वावच्छेद्यत्वेति** । संयोगेन वस्तुमात्रस्यैवाऽव्याप्यवृत्तितया गोत्वत्वघटाभावत्वादिकमेवाऽनवच्छेदकं तदवच्छेद्यत्वेत्यर्थः । **गुरुतयेति** । गवेतरासमवेतत्वावच्छिन्नत्वघटितोभयत्वापेक्षयेत्यादिः । **तादृशोभयत्वावच्छिन्नाभावाप्रसिद्ध्या** । गोत्वत्वावच्छिन्नघटितोभयत्वावच्छिन्नाभावाप्रसिद्ध्या । **अतः** । अव्याप्त्यादिवारणायेति भावः । **तदर्थश्च** । प्रतियोग्यसंबन्धित्वरूपविशेषणदलार्थश्च । तथा च प्रतियोगितावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नासंबन्धिहेतुमन्निष्ठाभावीयप्रतियोगितासामान्ये प्रतियोगि-

संबन्धी पर्वतादिस्तन्निष्ठस्य प्रलयपूर्वोत्पन्नकर्मात्यन्ताभावस्य प्रतियोगितानवच्छेदकं यद् घटत्वादिकं तदवच्छेद्यत्व संयोगसंबन्धावच्छेद्यत्वयोश्च साधनवन्निष्ठाभावप्रतियोगितायां सत्वेपि वन्हिमान् धूमादित्यादौ नाव्याप्तिः। न वा प्रतियोग्यसंबन्धिसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकीभूतविशिष्टसत्तात्वावच्छेद्यत्व-समवाय - संबन्धावच्छेद्यत्वयोः साधनवन्निष्ठाभावप्रतियोगितायां सत्वेपि सत्तावान् जातेरित्यादावव्याप्तिप्रसङ्गः।

## लक्ष्मीः

तावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नासंबन्धी साध्यतावच्छेदकसंबन्धेन स्वविशिष्टस्य संबन्धी तन्निष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभाव - स्वादृशस्वपदग्राह्यसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थः। वह्निमन्निष्ठतादृशाभावीयधूमनिष्ठप्रतियोगितायां स्वपदग्राह्यधूमत्वविशिष्टसंबन्धिनि पर्वतादौ धूमत्वावच्छिन्नासंबन्धित्वविरहेण घटत्वावच्छिन्नासंबन्धिधूमसंबन्धि पर्वतादिनिष्ठघटाभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्नत्व, संयोगसंबन्धावच्छिन्नत्वोभयस्यैव सत्वाद् धूमवान् वह्नेरित्यादौ नातिव्याप्तिः। नापि वह्निमान् धूमादित्यादावव्याप्तिः, धूमादिमन्निष्ठतादृशाभावीय घटनिष्ठप्रतियोगितायां घटत्वावच्छिन्नासंबन्धिवह्निसंबन्धिपर्वतादिनिष्ठघटाभावप्रतियोगिता - नवच्छेदकवह्नित्वावच्छिन्नत्व—संयोगावच्छिन्नत्वोभयाभावसत्वात्। **तेन**। प्रतियोगितावच्छेदसंबन्धनिवेशनेन। **प्रतियोगितावच्छेदकावच्छिन्नासंबन्धी**। प्रलयपूर्वोत्पन्नकर्मत्वावच्छिन्नासंबन्धी। **स्वपदग्राह्यवह्नित्वविशिष्टसंबन्धी पर्वतादिः**। विभिन्नकालीनयोराधाराधेयभावविरहात्। न तु संबन्धसामान्येन घटत्वावच्छिन्नासंबन्धीपर्वतादिःकालिकेन घटसंबन्धित्वात्पर्वतादेः। **तन्निष्ठस्य**। पर्वतादिनिष्ठस्य। **साधनवन्निष्ठाभावप्रतियोगितायां सत्वेऽपि**। धूमवन्निष्ठघटाभावप्रतियोगितायां सत्वेपि। धूमवन्निष्ठघटाभावप्रतियोगितासामान्ये स्वपदग्राह्यवन्हित्वविशिष्टसंबन्धिनिष्ठप्रतियोगिव्यधिकरणाभावो न घटाद्यभावः घटादेः कालिकेन वन्हिमति सत्वात्, किन्तु प्रलयपूर्वोत्पन्नकर्मात्यन्ताभावस्तत्प्रतियोगितानवच्छेदकघटत्वावच्छिन्नत्व, संयोगसंबन्धावच्छि-

प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धी यः साध्यतावच्छेदकावच्छिन्न-संबन्धी तन्निष्ठाभावप्रतियोगितानवच्छेदकं न घटाभावत्वगोत्वत्वादिकं, तस्यापि साध्यवन्निष्ठभेदप्रतियोगितावच्छेदकत्वात्, किन्तु लघुसमनियत गुरु प्रमेयधूम-त्वादिकमेव तथा, तथा च तदवच्छेद्यत्वाप्रसिद्ध्या वन्हिमान् धूमादित्यादाव-संभवोऽव्याप्तिर्वेत्यतः साध्यवन्निष्ठाभावप्रतियोगित्वमपि साध्यतावच्छेदकसंबन्धा-वच्छिन्न ग्राह्यम्। तेन संयोगादिसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतगोत्वत्वा-वच्छेद्यत्वप्रसिध्यैव लक्षणसमन्वयः।

---

## लक्ष्मीः

न्नत्वोभयोः सत्वेपि। **नाव्याप्तिरिति।** प्रतियोगितावच्छेदकीभूतसंयो-गेन घटाभावस्यैव प्रतियोगिव्यधिकरणत्वादिति भावः। विषयितया घटादेः साध्यतायां नित्यज्ञानत्वहेतौ नित्यज्ञानान्यत्वविशिष्टघटाभाव-मादाय लक्षणसमन्वयान्नासंभवो विहितः। प्रतियोगिताव-च्छेदकावच्छिन्नत्वनिवेशस्य फलमाह। **नवेति। प्रतियोग्यसंबन्धीति।** प्रतियोगिताश्रयाऽसंबन्धीत्यर्थः। अत्र प्रतियोगितापदेन विशिष्टसत्ता-निष्ठप्रतियोगिता गृहीतुं न शक्यते, साध्यसंबन्धिनस्तादृशप्रतियोगिता-श्रयशुद्धसत्तासंबन्धित्वात्, किन्तु घटादिनिष्ठप्रतियोगितैव,तथा च तादृ-शप्रतियोगिताश्रयासंबन्धिसाध्यीभूतसत्तासंबन्धिनिष्ठघटाभावप्रतियो-गितानवच्छेदक विशिष्टसत्तात्वावच्छेद्यत्व, समवायावच्छेद्यत्वयोः जातिमद्गुणादिनिष्ठविशिष्टसत्ताभावप्रतियोगितायां सत्वेपीत्यर्थः। **नवाऽव्याप्तिप्रसङ्ग इति।** जातिमद्गुणादिनिष्ठविशिष्टसत्ताभावीय-प्रतियोगितायां विशिष्टसत्तात्वावच्छिन्नासंबन्धिसत्तासंबन्धिगुणादि-निष्ठविशिष्टसत्ताभावप्रतियोगितानवच्छेदकसत्तात्वावच्छिन्नत्व,समवा-यावच्छिन्नत्वोभयाभावसत्वादिति भावः। स्वविशिष्टसंबन्धिनिष्ठप्रति-योगितायां यत्किञ्चित्संबन्धावच्छिन्नत्वस्य निवेशेऽसंभवमाह। **तन्निष्ठाभावप्रतियोगितानवच्छेदकमिति।** साध्यीभूतवह्निमन्निष्ठो यः समवायेन वन्ह्यभावः तादात्म्येन गोत्वादिभेदश्च तत्प्रतियोगिता-नवच्छेदकमित्यर्थः। **तस्यापि।** गोत्वत्वस्यापि। **तथा।** अनवच्छेद-कम्। **तथा च।** गुरुधर्मस्यानवच्छेदकत्वे च। **तदवच्छेद्यत्वाप्रसि-**

वस्तुतः प्रागुक्तयुक्तयाऽत्रापि साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धित्वं साध्यतावच्छेदकावच्छिन्नसंबन्धिनो वक्तव्यम्, न तु प्रतियोगितापि तादृशसंबन्धावच्छिन्ना ग्राह्या।

---

## लक्ष्मीः

द्ध्या। प्रमेयधूमत्वावच्छिन्नत्वाप्रसिद्ध्या। **असंभव इति**। हेतुमन्निष्ठाभावप्रतियोगितासामान्ये एव साध्यवन्निष्ठाभावीययत्किंचित्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतप्रमेयधूमत्वावच्छिन्नत्वघटितोभायाप्रसिद्धेरिति भावः। अत्र तादात्म्येन व्याप्यव्यापकभावाभ्युपगमे तादात्म्येन गोत्वसाध्यकतद्व्यक्तित्वहेतौ हेतुमन्निष्ठघटादिभेदप्रतियोगितासामान्ये गोत्ववन्निष्ठाभावप्रतियोगितानवच्छेदकगोत्वत्वावच्छिन्नत्वघटितोभयाभावसत्वादव्याप्तिर्वेत्युक्तम्। **केचित्तु** तादात्म्येन गोत्वसाध्यकसद्धेतौ गोत्वत्वविशिष्टसंबन्धिनि गोत्वभेदाभावसत्वेपि गोत्वभेदे प्रतियोगितासंबन्धेन वर्तमानस्य गोत्वस्य प्रतियोगितासंबन्धेनाभावसत्त्वाद् गोत्वत्वं प्रतियोगितावच्छेदकमेवेत्यसंभवः, यदि च प्रतियोगित्वस्य वृत्त्यनियामकतया तस्य न प्रतियोगितावच्छेदकत्वं तदाऽव्याप्तिरिति प्राहुः। **साध्यवन्निष्ठाभावप्रतियोगित्वमपीति**। अपिना साध्याभावे प्रतियोगिवैयधिकरण्यं प्रतियोगितावच्छेदकसंबन्धेनेत्यस्य समुच्चयः। **तेन**। साध्यवन्निष्ठाभावीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्व विवक्षणेन।

नन्वेवं धनी चैत्रत्वादित्यादौ स्वामित्वसंबन्धेन धनादेः साध्यतायामव्याप्तिः, वृत्त्यनियामकस्वामित्व संबन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धेरित्यत आह। **वस्तुत इति**। **पूर्वोक्तयुक्त्या**। प्रतियोगितायां संबन्धविशेषावच्छिन्नत्वानिवेशेन लाघवात्। **वक्तव्यमिति**। तथा च साध्यतावच्छेदकसंबन्धेन स्वप्रतियोगितावच्छेदकावच्छिन्नासंबन्धी यः स्वविशिष्टसंबन्धी तन्निष्ठाभावीययत्किंचित्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वघटितोभयाभावो विवक्षणीय इत्यर्थः। धनी चैत्रत्वादित्यादौ संयोगादिना घटाद्यभावमादाय लक्षणसमन्वयः।

नन्वेवमपि साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धि साध्यतावच्छेदकावच्छिन्नसंबन्धिनिष्ठाभावाप्रसिद्ध्या विभुत्वविशिष्टघटवान् महाकालत्वादित्यादावव्याप्तिः। महाकालान्यत्वविशिष्टघटत्वावच्छिन्नाभावस्यैव तादृशस्य कथंचिन्महाकाले प्रसिद्ध्या तत्राव्याप्तिवारणेपि तद्वन्हीय संयोगसंबन्धेन वन्हेः साध्यतायां तद्धेतावव्याप्तिः, तत्संबन्धेन यत्प्रतियोगिसंबन्धि तदन्यत्वस्य तद्वन्हिमत्यभावात्। महाकालनिरूपितविशेषणतया घटादेः साध्यतायां महाकालत्वहेतावुक्तक्रमेणाप्यव्याप्तिवारणासंभवाच्च तेन सम्बन्धेन यः प्रतियोगिसंबन्धी तदन्यत्वस्य महाकाले विरहात्।

## लक्ष्मीः

**एवमपि**। साध्यसंबन्धिनि साध्यतावच्छेदकसंबन्धेन प्रतियोग्यसंबन्धित्वविवक्षणेपि। **साध्यतावच्छेदकसंबन्धेन**। कालिकेन। अत्र शुद्धस्य साध्यत्वे घटत्वविशिष्टसंबन्धिनि खण्डकाले "स्पन्दादौ" तत्कालाऽसमानकालीनवस्तुनो अभावस्यैव प्रतियोगिव्यधिकरणस्यप्रसिद्धिसंभवाद्। **विभुत्वविशिष्टेति**। **तादृशस्य**। प्रतियोगिव्यधिकरणस्य। कालस्य जगदाधारत्वादाह। **कथंचिदिति**। **तत्र**। विभुत्वविशिष्टघटवान् महाकालत्वादित्यत्र। **तद्वह्नीयसंयोगेन**। तद्वह्निप्रतियोगिकसंयोगेन। **तद्धेतौ**। तत्पर्वतत्वहेतौ। **तत्संबन्धेन**। तद्वह्निप्रतियोगिकसंयोगसंबन्धेन। **प्रतियोगिसंबन्धि**। वह्निसंबन्धि। **वह्निमत्यभावात्**। पर्वतादावभावात्। एवं प्रतियोगिपदेन घटादेर्धारणे तत्संबन्धित्वाप्रसिद्धिर्बोध्या। तथा च तेन संबन्धेन प्रतियोगिव्यधिकरणाभावाप्रसिद्ध्याऽव्याप्तिरिति भावः। ननु साध्यतावच्छेदकसंबन्धस्य न्यूनवारकपर्याप्त्यनिवेशे तद्वन्हीय संयोगेन वन्हेः साध्यतास्थले केवलसंयोगेन घटाभावस्यैव प्रतियोगिव्यधिकरणस्य साध्यसंबन्धिनि सत्वान्नाव्याप्तिरिति चेन्न। पर्वतवृत्तीन्धनभिन्नप्रतियोगिकसंयोगेन वन्हेः साध्यतास्थले साध्यतावच्छेदकसंबन्धेन प्रतियोगिव्यधिकरणहेतुसामानाधिकरण्येन्धनाभावप्रतियोगितायां केवलसंयोगेन प्रतियोग्यसंबन्धि प्रकृतसाध्यसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकेन्धनत्वावच्छिन्नत्व, तादृशसंयोगावच्छिन्नत्वयोः सत्वादव्याप्तिवारणाय न्यूनवारकपर्याप्तिनिवेश-

न च साध्यतावच्छेदकसंबन्धसामान्ये साध्यतावच्छेदकावच्छिन्नसंबन्धियत्किञ्चिद्व्यक्त्यनुयोगिकत्व, यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकावच्छिन्नत्वं निवेश्यमतो गगनाभावद्वारैव प्रसिद्धिरिति वाच्यम् ।

## लक्ष्मीः

स्यावश्यकत्वात्, तथाचाप्रसिद्धयाऽव्याप्तिसंगतिः ।

कालिककालीनसंयोगेन वन्हिसाध्यकसद्धेतौ वन्हित्वविशिष्टसंबन्धिपर्वतादिनिष्ठोघटाभावो न प्रतियोगिव्यधिकरणः, कालिकस्यापि साध्यतावच्छेदकसंबन्धत्वात्, किन्तुतत्पर्वतासमानकालीनद्रव्याभाव एव तत्प्रतियोगितानवच्छेदकघटत्वावच्छिन्नत्व, संयोगावच्छिन्नत्वोभयस्यैव हेतुमन्निष्ठघटाद्यभावप्रतियोगितायां सत्वेनाव्याप्तिवारणाय न्यूनवारकपर्याप्तिर्निवेश्या, तथा चोक्तस्थलेऽ व्याप्तिरिति ।

**न चेति** । तथा च प्रतियोगिव्यधिकरण हेतुमन्निष्ठभावप्रतियोगितासामान्ये (साध्यतावच्छेदकसंबन्धसामान्ये साध्यतावच्छेदकीभूतयादृशधर्मविशिष्टयत्किञ्चिद्व्यक्त्यनुयोगिकत्व, यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिकत्वोभयाभावः) तादृशप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्व-साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावस्ता - दृशसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यं व्याप्तिरिति फलितम् । घटवान् महाकालत्वादित्यादौ हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावीयसमवायसंबन्धावच्छिन्नघटनिष्ठप्रतियोगितायां (साध्यतावच्छेदककालिकसंबन्धसामान्ये साध्यतावच्छेदकीभूतघटत्वावच्छिन्नसंबन्धिमहाकालव्यक्त्यनुयोगिकत्वसत्वेपि गगनत्वावच्छिन्नप्रतियोगिकत्वविरहेणोभयाभावसत्वात्) तादृशप्रतियोगितानवच्छेदकघटत्वाद्यवच्छिन्नत्व, कालिकसंबन्धावच्छिन्नत्वोभयाभावसत्वाल्लक्षणसमन्वयः ।

अथ साध्यतावच्छेदकविशिष्टसंबन्धिनि यत्किंचित्त्वनिवेशो व्यथः इति चेन्न । धूमवन्निष्ठतद्व्यक्त्यभावप्रतियोगितायां साध्यतावच्छेदकसंयोगसामान्ये वह्नित्वविशिष्टसंबन्धिमहाकालानुयोगिकत्व, महानसीयवह्निव्यक्तित्वावच्छिन्नप्रतियोगिकत्वोभयसत्वेन "उभयाभावविरहेण" तादृशी न तद्व्यक्तित्वावच्छिन्नप्रतियोगिता अपितु घटत्वावच्छिन्नप्रतियोगितैव तदनवच्छेदकतद्व्यक्तित्वावच्छिन्नत्व, संयोग-

स्वरूपसंबन्धेन गगनादेर्वृत्तिमत्वपक्षे एव प्रतियोगिताधर्मिकोभयाभावगर्भ - निरुक्त्यादरात्, तत्र गगनाभावमादाय प्रसिद्ध्यसंभवात्। कालिकविशेषणतायां गगनत्वावच्छिन्नप्रतियोगिकत्व, साध्यवन्महाकालानुयोगिकत्वयोः सत्वादितिचेत्, एतदस्वरसेनैव प्रतियोगितयोरित्यादिना प्रतियोगिवैयधिकरण्यमुपेक्ष्य लक्षणान्तरं वक्ष्यते इत्येके।

## लक्ष्मीः

संबन्धावच्छिन्नत्वयोः सत्वाद् वह्निमान् धूमादित्यादावव्याप्त्यापत्तेः।

ननु साध्यतावच्छेदकसंबन्धसामान्ये साध्यतावच्छेदकविशिष्टसंबन्धियत्किंचिद्व्यक्त्यनुयोगिकत्वविशिष्टयादृशप्रतियोगितावच्छेद - कावच्छिन्नप्रतियोगिकत्वाभावस्तादृशप्रतियोगितानवच्छेदकेत्यादि निवेशेनैव सामंजस्ये किमुभयाभावनिवेशेनेति चेन्न। महाकालानुयोगिककालिकेन घटसाध्यक महाकालत्वहेतावव्याप्तेः। महाकालानुयोगिकत्वविशिष्टगगनत्वावच्छिन्नप्रतियोगिकत्वाप्रसिद्धेः। न च महाकालाभावस्यैव लक्षणघटकत्वम्, महाकालप्रतियोगिकत्वविशिष्टमहाकालानुयोगिकत्वस्य तादात्म्ये प्रसिद्धतया साध्यतावच्छेदककालिकसंबन्धे तादृशाभावसत्वान्नाव्याप्तिरिति वाच्यम्। महाकालानुयोगिककालिकतादात्म्यान्यतरसंबन्धेन घटसाध्यकमहाकालत्वहेतावव्याप्तेः, महाकालाभावोपि न लक्षणघटकः, महाकालानुयोगिकत्वविशिष्टमहाकालप्रतियोगिकत्वस्य साध्यतावच्छेदकान्यतरस्मिन् सत्वादिति।

न चेत्यादिनाऽऽशङ्कितं समाधत्ते। **स्वरूपसंबन्धेनेति**। कालिकसंबन्धेन। **तत्र**। प्रतियोगिताधर्मिकोभयाभावघटितलक्षणे। **प्रसिद्ध्यसंभवादिति**। उभयाभावप्रसिद्ध्यसंभवादित्यर्थः। **सत्वादिति**। तथाचाऽप्रसिद्धिरिति भावः। न च साध्यप्रतियोगिकसाध्यतावच्छेदकसंबन्धसामान्ये इत्युक्तौ नोक्ताव्याप्तिः, पटाभावमादावैव लक्षणसमन्वयात्। प्रमेयस्य व्याप्यवृत्तितया तत्साध्यक प्रतियोगिवैयधिकरण्याप्रवेशादिति वाच्यम्। समवायस्यैक्यमते हेतुमन्निष्ठविशिष्टसत्ताभावप्रतियोगितायां सत्तासमवाये विशिष्टसत्तात्वावच्छिन्नप्रतियोगिकत्व, सत्तासंबन्धि गुणानुयोगिकत्वोभयोः सत्त्वेन विशिष्टसत्तात्वस्य यादृशप्रतियोगितावच्छेदकपदेन धर्तुमशक्यतया गगननिष्ठप्रतियोगि-

परे तु निरुक्तप्रतियोग्यसंबन्धिप्रकृतसाध्यवन्निष्ठाभावप्रतियोगितायां यद्यद्धर्मावच्छेद्यत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावः प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणप्रकृतहेतुमन्निष्ठाभावप्रतियोगितासामान्येपि तादृशोभयाभावकूटवत्वं विवक्षणीयम्। अस्ति च समवायावच्छिन्नघटाद्यभावप्रतियोगितायां यत्कालिकसंबन्धावच्छिन्नत्व, घटत्वावच्छिन्नत्वोभयाभाववत्वं तदेव प्रतियोग्यनधिकरणमहाकालनिष्ठाभावप्रतियोगितासामान्येपीति घटवान् महाकालत्वादित्यादौ नाव्याप्तिः।

## लक्ष्मीः

तानवच्छेदकविशिष्टसत्तात्वावच्छिन्नत्व समवायावच्छिन्नत्वोभयोः सत्वात्सत्तावान् जातेरित्यादावव्याप्तितादवस्थ्यात्।

नन्वित्यादिशङ्कां समाधत्ते। **एतदस्वरसेनैवेति**। घटवान् महाकालत्वादित्यादावव्याप्त्यैवेत्यर्थः। **वक्ष्यते**। दीधितिकार इति शेषः। अत्र साध्यतावच्छेदकसंबन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नाधारतासामान्ये साध्यसंबन्धियत्किंचिद्व्यक्तिवृत्तित्व, यादृशप्रतियोगितावच्छेदकावच्छिन्नाधेयतानिरूपितत्वोभयाभावस्तादृशप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावस्य हेतुमन्निष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितासामान्ये विवक्षणादेव घटवान् महाकालत्वादित्यादौ पटाभावमादायैवाव्याप्तिवारणसंभवे लक्षणान्तरानुसरणं व्यर्थमित्यस्वरस एके इत्यनेन सूचितः। निरुक्ताव्याप्तिवारयतां परेषां मतमाह। **परे तु इति**। वह्निमान् धूमादित्यादौ वह्निमन्निष्ठघटाभावीयप्रतियोगितायां वर्तमानस्य संयोगसंबन्धावच्छिन्नत्व, वह्नित्वावच्छिन्नत्वोभयाभावस्य धूमवन्निष्ठघटाभावीयप्रतियोगितायामपि सत्वाल्लक्षणसमन्वयः। धूमवान् वह्नेरित्यादौ धूमवन्निष्ठघटाभावप्रतियोगितायां वर्तमानस्य संयोगसंबन्धावच्छिन्नत्व, धूमत्वावच्छिन्नत्वोभयाभावस्य वह्निमन्निष्ठाभावप्रतियोगितायामसत्वान्नातिव्याप्तिः। **समवायावच्छिन्नघटाभावेति**। साध्यवन्निष्ठेत्यादिः। **तदेव**। तादृशोभयाभाववत्वमेव।

अथात्र प्रतियोग्यनधिकरणसाध्यवन्निष्ठाभावीयप्रतियोगितासामान्ये यद्, हेतुमन्निष्ठाभावप्रतियोगितासामान्येपि तदित्येवोच्यताम्। किं तादृशोभयाभावत्वेन निवेशेनेति चेन्न। धूमवान् वह्नेरित्यादिव्यभिचारिमात्रेऽ-

## लक्ष्मीः

तिव्याप्तिः, प्रमेयत्वादौ साध्यवन्निष्ठाभावप्रतियोगितात्वव्यापकत्व हेतुमन्निष्ठाभावप्रतियोगितात्वव्यापकत्वस्य च सत्त्वात्। न च साध्यवन्निष्ठाभावप्रतियोगितासामान्ये यादृशाभावो हेतुमन्निष्ठाभावप्रतियोगितासामान्येपि तादृशाभावः इत्युक्तौ न दोष इति वाच्यम्। गगनाभावादौ उभयप्रतियोगितात्वव्यापकत्वसत्वात्, उक्तदोषतादवस्थ्यात्। यद्यपि यादृशाभावकूटः साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकः, तादृशाभावकूटः हेतुमन्निष्ठाभावप्रतियोगितात्वव्यापकः इत्यादिरीत्या निवेशे उक्तदोषवारणसंभवात्, तथापि घटाभावपटाभावमठाभावकूटे उक्तप्रतियोगितात्वद्वयव्यापकत्वसत्वेनोक्तदोषतादवस्थ्यात्। यादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वं साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकतावच्छेदकं तादृशाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वं हेतुमन्निष्ठाभावीयप्रतियोगितात्वव्यापकतावच्छेदकं तादृशसाध्यसामानाधिकरण्यमित्युक्तौ सकलदोषवारणात्। धूमत्वावच्छिन्नत्व संयोगसंबन्धावच्छिन्नत्वोभयाभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वे साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकतावच्छेदकत्वसत्वेपि हेतुमन्निष्ठाभावीयप्रतियोगितात्वव्यापकतावच्छेदकत्वविरहात्। **अत्रोच्यते।** अभावत्वावच्छिन्नानुयोगिताकपर्याप्तिककूटत्वावच्छिन्नवत्वे सर्वत्राऽसंभवापत्तेः, वह्निमन्निष्ठाभावप्रतियोगितायां ब्रह्माण्डीयाभावकूटविरहात्। सामान्यतो अभावकूटे व्यापकत्वनिवेशे च व्यभिचारिण्यतिव्याप्त्यापत्तिः, यत्किंचित्कूटे व्यापकत्वस्य सत्वात्। वस्तुतस्तु अधिकरणभेदेनाभावभेदाद् घटाभावीयप्रतियोगितानिरूपितवृत्तितावच्छेदककूटत्वे साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापकतावच्छेदकत्वविरहात्तादृशप्रतियोगितात्वस्य पटाभावप्रतियोगितायामपि सत्वात्तत्रकूटत्वावच्छिन्नाधिकरणत्वाभावाद्वह्निमान् धूमादित्यादावव्याप्तेरित्यन्यत्र विस्तरः।

**निरुक्तप्रतियोग्यसंबन्धिप्रकृतसाध्यवन्निष्ठाभावप्रतियोगितायामिति।** प्रतियोगितावच्छेदकसंबन्धेन प्रतियोगितावच्छेदकावच्छिन्नाऽसंबन्धी यः साध्यतावच्छेदकावच्छिन्नसंबंधी तन्निष्ठाभावीयप्रतियोगितासामान्ये इत्यर्थः। वह्निमन्निष्ठतादृशपटाभावीय पट

## लक्ष्मीः

निष्ठयत्किंचित्प्रतियोगितायां घटत्वाद्यवच्छिन्नत्व, संयोगावच्छिन्नत्वोभयाभावसत्वेन हेतुमन्निष्ठाभावप्रतियोगितासामान्यान्तर्गतायां घटनिष्ठप्रतियोगितायां घटत्वावच्छिन्नत्वघटितोभयाभावविरहेण वन्हिमान् धूमादित्यादावव्याप्तिवारणाय सामान्यपदम्। तथा च साध्यवन्निष्ठाभावीयप्रतियोगितात्वव्यापको वह्नित्वावच्छिन्नत्वघटितोभयाभाव एव, तस्य हेतुमन्निष्ठाभावप्रतियोगितायां सत्वान्नाव्याप्तिः। यद्यद्धर्मावच्छिन्नत्वाभावमात्रनिवेशे धूमवन्निष्ठसमवायावच्छिन्नधूमाद्यभावप्रतियोगितायां धूमत्वाद्यवच्छिन्नत्वस्य सत्वेन यद्यद्धर्मान्तर्गत गगनत्व गुणत्वाद्यवच्छिन्नत्वाभावसत्वात् "संयोगेन गुणाद्यधिकरणाप्रसिद्धत्वेन तदभावस्य लक्षणाघटकत्वात्" हेतुमन्निष्ठाभावीयसंयोगावच्छिन्नधूमनिष्ठप्रतियोगितायामपि तादृशगगनत्वाद्यवच्छिन्नत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावसत्वाद् धूमवान् वह्नेरित्यादावतिव्याप्तिरत उभयाभावनिवेशः। तथा च समवायेन धूमाभावीयप्रतियोगितायां वर्तमानसंयोगावच्छिन्नत्व, धूमत्वावच्छिन्नत्वोभयाभावस्य हेतुमद्वृत्यभावप्रतियोगितायामसत्वान्नातिव्याप्तिः। अथात्र प्रतियोग्यनधिकरणसाध्यवन्निष्ठाभावीययद्धर्मावच्छिन्नप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्वाभावः हेतुमन्निष्ठाभावीयतद्धर्मावच्छिन्नप्रतियोगितासामान्येपि तत्संबन्धावच्छिन्नत्वाभाव इत्येव कथं नोक्तं? घटवान् महाकालत्वादित्यादौ समवायेन घटाभावमादाय लक्षणसमन्वय इति चेन्न। घटवृत्तित्वविशिष्टद्रव्यत्ववान् घटत्वादित्यादौ अव्याप्तेः। केनापि संबन्धेन साध्याभावस्य साध्यवति असत्वात्। तथाहि–समवायेन साध्याभावस्य साध्यवन्निष्ठत्व विरहात, संयोगस्वरूपादिसंबन्धेन प्रतियोग्यनधिकरणत्वाऽप्रसिध्या तादृशसंबन्धेन साध्याभावस्य लक्षणाघटकत्वात्। कालिकसंबन्धेन च प्रतियोग्यधिकरणत्वस्यैव साध्यवति सत्वान्न तेन संबन्धेनापि अभावस्य लक्षणघटकत्वम्। संभवति च घटाभावस्यैव, परन्तु साध्यवन्निष्ठाभावीयघटत्वावच्छिन्नसंयोगसंबन्धावच्छिन्नप्रतियोगितायां समवायसंबन्धावच्छिन्नत्वाभावसत्वेपि साध्यवन्निष्ठाभावीयघटत्वावच्छिन्नप्रतियोगितात्वस्य समवायसंबन्धावच्छिन्नप्रतियोगितायामपि सत्वात्तत्र साध्यतावच्छेदकसंबन्धावच्छिन्नत्वाभावविर-

यद्यदिति वीप्सादरान्निरुक्तप्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगिता-सामान्ये एव गुणत्वावच्छेद्यत्व, संयोगसंबन्धावच्छेद्यत्वोभयाभावसत्वेपि धूमवान्

## लक्ष्मीः

हात्। न च घटान्तरानुयोगिकसमवायेन घटवृत्तित्वविशिष्टद्रव्यत्वं नास्तीत्यभावस्यापि लक्षणघटकत्वेन तदीय प्रतियोगितायां शुद्ध-समवायावच्छिन्नत्वविरहान्नाव्याप्तिरिति वाच्यम्। तद्घटवृत्तित्व-विशिष्टद्रव्यत्ववान् तद्घटत्वादित्यादावव्याप्तिः, तत्र तद्घटान्तरानु-योगिकसमवायेन प्रतियोग्यधिकरणाप्रसिध्द्या तत्संबन्धेनाभावस्य-लक्षणाघटकत्वात्। तद्घटानुयोगिकसमवायेन च प्रतियोग्यधिकरण-त्वस्यैव सत्वात्। संयोगेन घटाद्यभावस्यैव कथंचिल्लक्षणघटकत्वेपि साध्यवन्निष्ठाभावीयघटत्वावच्छिन्नप्रतियोगितात्वस्य समवायाव-च्छिन्नप्रतियोगितायामपि सत्वात्तत्र च साध्यतावच्छेदकसंबन्धा-वच्छिन्नत्वाभावविरहात्। न च तत्र विषयितासंबन्धेन तद्घटवृत्तित्व-विशिष्टद्रव्यत्वाभावमादायैव लक्षणसमन्वयः, तदीयप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वाभावसत्वादिति वाच्यम्। तादा-त्म्यातिरिक्तवृत्यनियामकसंबन्धेन व्याप्यव्यापकभावानङ्गीकारपक्षे दूषणं दत्तमस्माभिः। न च तद्घटवृत्तित्वविशिष्टद्रव्यत्वभेदमादायैव लक्षणसमन्वयः, तदीय प्रतियोगितायां साध्यतावच्छेदकसंबन्धाव-च्छिन्नत्वाभावसत्वादिति वाच्यम्। तादात्म्येनापि व्याप्यव्यापक-भावानङ्गीकारात्, तदङ्गीकारे तु दधित्वविशिष्टप्रमेयवान् स्थूलदधि-त्वादित्यत्राव्याप्तेरित्यन्यत्र विस्तरः।

**यद्यदिति वीप्सादरादिति। प्रतियोग्यनधिकरणहेतु-मन्निष्ठाभावप्रतियोगितासामान्ये** इति। वह्निमन्निष्ठाभावीयधूम-निष्ठप्रतियोगितासामान्ये इत्यर्थः। **उभयाभावसत्वेपीति**। धूमवति संयोगेन गुणाद्यभावस्य प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यधि-करणाऽप्रसिध्द्या यथोक्तप्रतियोगिव्यधिकरणत्वाभावात्तत्र वर्त्तमानस्य तादृशघटाभावस्य प्रतियोगितानवच्छेदकीभूतगुणत्वावच्छिन्नत्व, संयोगसंबन्धावच्छिन्नत्वोभयाभावसत्वेपीत्यर्थः। **नातिव्याप्तिरिति**। तत्र हेतुमाह। **धूमत्वावच्छेद्यत्वेति**। **तादृशत्वेन**। यद्यद्धर्मावच्छिन्न-

वन्हेरित्यादौ नातिव्याप्तिः। धूमत्वावच्छेद्यत्व, संयोगसंबन्धावच्छेद्यत्वोभयाभावस्यापि तादृशत्वेन प्रतियोग्यनधिकरणवन्हिमन्निष्ठाभावप्रतियोगितासामान्ये विरहात्, संयोगसंवन्धावच्छिन्नधूमाभावप्रतियोगितायां तदसत्वादित्याहुः।

## लक्ष्मीः

त्वघटितोभयाभावान्तर्गतत्वेन। **तस्यैव**। धूमत्वावच्छिन्नत्वघटितोभयाभावस्यैव। एवकारेण गुणत्वावच्छिन्नत्वघटितोभयाभावस्य व्यावृत्तिः। **तदसत्वात्**। संयोगसंबन्धावच्छिन्नत्व,धूमत्वावच्छिन्नत्वोभयाभावस्याऽसत्वात्प्रत्युत तादृशोभयस्यैव सत्वात्। तथा च नातिव्याप्तिरिति भावः। अत्र स्वामित्वसंबन्धेन धनादेः साध्यतायां चैत्रत्वादिहेतौ अव्याप्तिः, प्रतियोगितानिष्ठस्य स्वामित्वसंबन्धावच्छिन्नत्वस्याप्रसिद्धतया तदभावस्य साध्यवन्निष्ठाभावप्रतियोगितायामसत्वादित्यस्वरस आहुरित्यनेन सूचितः।

हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमित्यत्र प्रतियोगितानवच्छेदकमित्यस्य यदि प्रतियोगितावच्छेदकप्रतियोगिकभेदवानर्थःतदा धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वादौ वह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकपटत्वादिरूपयत्किंचिद्धर्मभेदसत्वाद् यद्धर्मपदेन वह्नित्वादेरप्युपादातुं शक्यतया तदन्यत्वस्य साध्यतावच्छेदकेऽसत्वादसंभवः, यदि यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्नभेद उच्यते, तदा प्रमेधूमवान् वन्हेरित्यादावतिव्याप्तिः, प्रमेयधूमत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वापेक्षया लघोर्धूमत्वघटिततादृशावच्छेदकत्वस्यैव तादृशभेदप्रतियोगितावच्छेदकत्वेन ऽमेयधूमत्वस्य यद्धर्मपदेनोपादातुमशक्यत्वात्। एवं हेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व, स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वोभयाभाव इत्यत्र स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकं यदि तादृशावच्छेदकप्रतियोगिकभेदवत्, तदाऽसंभवः, वह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकपटत्वादियत्किंचिद्धर्मभेदस्य घटत्वे सत्वात्तदवच्छेद्यत्व, संयोगसंबन्धावच्छिन्नत्वोभयोरेव हेतुमन्निष्ठाभावप्रतियोगितायां सत्वात्, यदि

तादृशप्रतियोगिताश्च विशिष्योपादेयाः, नातो गुरोरवच्छेदकत्वं विना दुर्वचत्वं प्रतियोगित्वस्य ।

ननु स्वविशिष्टसवन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमित्यत्राऽनवच्छेदकत्वं न तादृशावच्छेदकप्रतियोगिकभेदमात्रम्, धर्ममात्रस्यैव तादृश यत्किंचिदवच्छेदकभिन्नत्वेन व्याप्तिलक्षणाऽसंभवप्रसगात्, किन्तु तादृशावच्छेदकत्वावच्छिन्नप्रतियोगिताको भेदः, तथा चाऽवच्छेदकत्वगर्भाया निरुक्तेः प्रमेयधूमवान् वन्हेरित्यादावतिव्याप्तिः । अवच्छेद्यगर्भायास्तु प्रमेयवन्हिमान् धूमादित्यादावव्याप्तिः, प्रमेयवन्हित्व-

## लक्ष्मीः

स्वविशिष्टसंवन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेद उच्यते तदा प्रमेयवह्निमान् धूमादित्यत्राऽव्याप्तिः, प्रमेयवह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदाऽप्रसिद्धेः लघुतया वह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगतावच्छेदकत्वस्यैव तादृशभेदप्रतियोगितावच्छेदकत्वादित्याशंकते । **नन्विति । तादृशावच्छेदकेति** । स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकेत्यर्थः । **धर्ममात्रस्यैव** । अवच्छेदकमात्रस्यैव । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधर्ममात्रस्यैवेति यावत् । **तादृशयत्किञ्चिदवच्छेदकभिन्नत्वेन** । स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकपटत्वादिभिन्नत्वेन । **तादृशेति** । स्वविशिष्टसंबन्धिनिष्ठाभावेत्यर्थः । **तथा चेति** । स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदविवक्षणे चेत्यर्थः । **अवच्छेदकत्वगर्भाया निरुक्तेरिति** । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकमित्याकारिकाया इत्यर्थः । **अतिव्याप्तिरिति** । प्रमेयधूमत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य लघुधर्मसमनियतस्य गुरुतयाऽनवच्छेदकत्वादिति शेषः । तथा च यद्धर्मपदेन प्रमेयधूमत्वस्य धर्तुमशक्यत्वादिति भावः । **अवच्छेद्यत्वगर्भायास्तु इति** । हेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व, स्वविशिष्टसंबन्धिनिष्ठा-

विशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकवृत्तिप्रतियोगिताया लाघवेन वन्हिमन्निष्ठाभावप्रतियोगितावच्छेदकत्वेनैवावच्छेदादत आह । प्रतियोगिताश्चेति ।

तादृशप्रतियोगितावच्छेदकनिष्ठप्रतियोगिताव्यक्तयो विशिष्य तत्तदवच्छेदकत्वावच्छिन्नत्वेन प्रवेशनीयाः, न तु अनुगततादृशावच्छेदकत्वावच्छिन्नत्वेन, यतो गुरुधर्मस्यानवच्छेदकत्वे व्याप्तेर्दुर्वचत्वं स्यादित्यर्थः ।

## लक्ष्मीः

भावप्रतियोगितानवच्छेदकावच्छेद्यत्वोभयाभाव इत्याकारिकायास्तु इत्यर्थः । **अव्याप्तिरिति** । प्रमेयवन्हित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदाऽप्रसिद्धेरिति शेषः । **अप्रसिद्धौ हेतुमाह । प्रमेयवन्हित्वविशिष्टेति** । अतः । अव्याप्त्यतिव्याप्तिवारणायेति भावः । **तादृशप्रतियोगितावच्छेदकनिष्ठप्रतियोगिताव्यक्तय इति** । यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकनिष्ठप्रतियोगिताव्यक्तयः— स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकनिष्ठप्रतियोगिताव्यक्तयश्चेत्यर्थः । **तत्तदवच्छेदकत्वावच्छिन्नत्वेनेति** । तथा च नाऽसंभवः । वह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानिरूपिततत्तदवच्छेदकत्वान्तर्गतघटत्वादिनिष्ठावच्छेदकत्वावच्छिन्नभेदस्य घटत्वादौ विरहेण यद्धर्मपदेन वह्नित्वादेर्धर्तुमशक्यत्वात्, न वाऽतिव्याप्तिरव्याप्तिर्वा, प्रमेयधूमत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानिरूपिततत्तदवच्छेदकत्वावच्छिन्नभेदस्य प्रमेयवह्नित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानिरूपिततत्तदवच्छेदकत्वावच्छिन्नभेदस्य च प्रसिद्धेः । **तादृशावच्छेदकत्वावच्छिन्नत्वेन** । यद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वावच्छिन्नत्वेन । **गुरुधर्मस्य** । प्रमेयधूमत्वादिविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्य । **अनवच्छेदकत्वे** । स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितावच्छेदकभेदप्रतियोगितानवच्छेदकत्वे । **व्याप्तेर्दुर्वचत्वं स्यादिति** । अतिव्याप्त्यादिदोषेणेत्यादिः । ननु तादृशप्रतियोगितापदेन स्वविशिष्टसंबन्धिनिष्ठाभावीयप्रतियोगिताव्यक्तय एव ग्राह्याः, तथा

स्वविशिष्टसंबन्धिनिष्ठाभावीयप्रतियोगिताव्यक्तीर्विशिष्योपादाय तत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटवत्त्वं निवेशनीयमिति तु अपव्याख्यानम्। तत्प्रतियोगिताविशेषितावच्छेदकत्वव्यक्तीनां वास्तविकतत्तदवच्छेदकत्वव्यक्तीरपेक्ष्य गुरुत्वेन तत्प्रतियोगितानिरूपितावच्छेदकत्वावच्छिन्नभेदानामप्यप्रसिद्ध्या दुर्वचत्वतादवस्थ्यात्। यदि च समनियतनानाधर्मावच्छिन्नप्रतियोगित्वस्य भेदे मानाभावस्तदा तत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटस्य प्रवेशेपि न क्षतिः, तत्तत्प्रतियोगितावच्छेदकत्वस्य तत्तदवच्छेदकत्वसमनैयत्याभावेन गुरुत्वस्याकिञ्चित्करत्वादिति ध्येयम्।

## लक्ष्मी

च तत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटवत्त्वं निवेशनीयमिति स्वविशिष्टसंबन्धिनिष्ठाभावीयत्वोपलक्षितोभयावृत्तिधर्मावच्छिन्ननिरूपितावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदकूटवद्धेतुमन्निष्ठाभावप्रतियोगितावच्छेदकमिति समुदितार्थः। **अपव्याख्यानमिति**। अतिव्याप्त्यादेर्वारणं न संभवतीति भावः। असंभवे हेतुमाह। **वास्तविकतत्तदवच्छेदकत्वव्यक्तीरपेक्ष्येति**। धूमत्वविशिष्टसंबन्धिनिष्ठाभावीयप्रतियोगितानिरूपितत्तदवच्छेदकत्वमेव प्रमेयधूमत्वविशिष्टसंबन्धिनिष्ठभावीयतत्तत्प्रतियोगिताविशेषितावच्छेदकं नेति भेदीयप्रतियोगितावच्छेदकं लाघवादतिप्रसंगाद्यनापादकत्वाच्च तथा च तादृशतत्तत्प्रतियोगिताविशिष्टावच्छेदकत्वावच्छिन्नप्रतियोगिताकभेदस्याप्यप्रसिद्धयोक्ताव्याप्त्यतिव्याप्त्योर्वारणं न संभवतीति भावः।

**समनियतनानाधर्मावच्छिन्नप्रतियोगित्वस्य**। संख्यावान्न परिमाणवान्नेति भेदप्रतियोगितावच्छेदकधर्मयोः संख्यापरिमाणयोः समनियततया तत्तद्धर्मावच्छिन्नप्रतियोगित्वस्य। **भेदे मानाभाव** इति। प्रतियोगितावच्छेदकधर्मयोः समनियतत्वेपि तत्तद्धर्मावच्छिन्नप्रतियोगित्वानां भेदः स्वीकर्तव्यः, "प्रतियोगितावच्छेदकभेदेन प्रतियोगिताभेदात्" प्रतियोगितावच्छेदकसमनियतत्वस्यैक्यप्रयोजकत्वे द्रव्यभेदगुणवद्भेदप्रतियोगित्वयोरैक्यप्रसङ्गः, द्रव्यत्वगुणयोः समनियतत्वात्, निरवच्छिन्नावच्छेदकताकत्वेन, सावच्छिन्नावच्छेदकताकत्वेन च तयोर्भेदाभ्युपगमादित्याशयेन यदीत्युक्तम्। **तदा**। लघुधर्मनिष्ठप्रति-

**प्रतियोगित्वं संबन्धित्वं च साध्यतावच्छेदकसंबन्धेन बोध्यम्। अतो न संबन्धभेदमादाय दोषः।**

**अभावश्च प्रतियोगिव्यधिकरणो बोध्यः।**

संबन्धभेदमिति। इदं च प्रागेव निरुक्तिव्याख्यायां प्रपञ्चितम्। ननु प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावप्रतियोगितायाः संयोगत्वावच्छिन्नत्वेपि संयोगत्वस्य स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वाभावात्संयोगी सत्वादित्यत्र अतिव्याप्तिरत आह। **अभावश्चेति**। निरुक्तित्रयेपीति शेषः। तथा च निरुक्तप्रतियोग्यन-

## लक्ष्मीः

योगितावच्छेदकतायां समनियतत्वस्य प्रयोजकत्वे। **तत्तत्प्रतियोगितावच्छेदकत्वावच्छिन्नभेदकूटस्य**। प्रमेयधूमत्वविशिष्टसंबन्धनिष्ठाभावीयतत्तत्प्रतियोगिताविशेषितावच्छेदकत्वावच्छिन्नभेदकूटस्य । **नक्षतिः**। नाऽप्रसिद्धिः। प्रमेयधूमत्वविशिष्टसंबन्धिनिष्ठाभावीयप्रतियोगितानिरूपिततत्तदवच्छेदकत्वस्य लघुत्वेपि समनैयत्याभावात्। लघुधर्मस्य प्रत्येकघटत्वादिनिष्ठतया घटत्वे समनियतत्वाभावात्। अवच्छेदकत्वस्यावच्छेदकमात्रेसत्वात्। **संबन्धित्वमिति**। स्वविशिष्टसंबन्धित्वमित्यर्थः। **प्रतियोगित्वमिति**। यद्धर्मविशिष्ट संबन्धिनिष्ठाभावप्रतियोगित्वमित्यर्थः। **अतः**। साध्यतावच्छेदकसंबन्धेन संबन्धित्व—प्रतियोगित्वयोर्निवेशात्। **संबन्धभेदमादायेति**। संबन्धान्तरमादायेत्यर्थः। **नदोष इति**। नाऽसंभव इत्यर्थः। धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वादेः कालिकेन घटत्वविशिष्टसंबन्धिपर्वतादिनिष्ठाभावप्रतियोगितावच्छेदकत्वेपि नासंभव इति भावः। एवं धूमवन्निष्ठाभावप्रतियोगितावच्छेदकघटत्वादेः घटत्वविशिष्टसंबन्धिभूतलनिष्ठसमवायावच्छिन्नघटाभावप्रतियोगितावच्छेदकत्वेपि नासंभवः। **इदं च**। स्वविशिष्टसंबन्धित्वे—स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितायां च संबन्धविशेषनिवेशनप्रयोजनं च। **हेतुमन्निष्ठेति**। सत्तावद्गुणनिष्ठेत्यर्थः। **प्रतियोगितानवच्छेदक-**

**कालिकविशेषणताविशेषेण च साध्यतायां तादृशप्रतियोगितावच्छेदकत्वमनित्यतत्तद्व्यक्तित्वे प्रसिद्धम् ।**

धिकरणस्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वं संयोगत्वेप्यक्षतमिति हेतुमन्निष्ठाभावप्रतियोगितायास्तदवच्छेद्यत्वादेव नातिव्याप्तिरिति भावः ।

नन्वेवं गोमान् महाकालत्वादित्यत्राव्याप्तिः, गोत्वविशिष्टसंबन्धिनिष्ठस्याभाव-

## लक्ष्मीः

**त्वाभावादिति** । प्रतियोगितावच्छेदकत्वादिति यावत् । संयोगस्याऽव्याप्यवृत्तित्वादिति भावः । **निरुक्तित्रयेपीति** । तादृशप्रतियोगितावच्छेदकावच्छिन्नाभाववति असंबद्धं यद्धर्मविशिष्टसामान्यम्, स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकम् , साध्यतावच्छेदकविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वैतन्निरुक्तित्रयेपीति भावः । **तथा च** । निरुक्तित्रयघटकाऽभावे प्रतियोगिवैयधिकरण्यनिवेशे च । **निरुक्तेति** । प्रतियोगितावच्छेदकावच्छिन्नेत्यर्थः । स्वं—पारिभाषिकावच्छेदकम् । **नातिव्याप्तिरिति** । संयोगत्वविशिष्ट संबन्धिनि संयोगाभावो न प्रतियोगिव्यधिकरणः किन्तु घटाद्यभाव एव तत्प्रतियोगितानवच्छेदकं संयोगत्वम्, एवं—संयोगाभाव प्रतियोगितायां संयोगत्वविशिष्टसंबन्धिनिष्ठप्रतियोगिव्यधिकरणाभावप्रतियोगितानवच्छेदकसंयोगत्वावच्छेद्यत्वघटितोभयाभावविरहश्चेति नातिव्याप्तिरिति भावः । यद्यपि इदमीयप्रतियोगिवैयधिकरण्यानिवेशेपि संयोगी सत्वादित्यादौ नातिव्याप्तिः, हेतुमन्निष्ठद्रव्यत्वाभावीय प्रतियोगितायां साध्यतावच्छेदकीभूतसंयोगत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकद्रव्यत्वत्वावच्छिन्नत्वघटितोभयाभावविरहात् । तथापि पूर्वोक्तरीत्या "संयोगेन वस्तुमात्रस्याव्याप्यवृत्तितया" वन्हिमन्निष्ठाभावप्रतियोगितानवच्छेदकगोत्वत्व घटाभावत्वावच्छेद्यत्व घटितोभयत्वस्य गुरुतया तदवच्छिन्नाभावाप्रसिध्या वन्हिमान् धूमादित्यादावव्याप्तिवारणाय तत् ।

एवं प्रतियोगिवैयधिकरण्यनिवेशे । **गोत्वविशिष्टसंबन्धिनिष्ठस्य** ।

मात्रस्यैव साध्यताघटककालिकसंबन्धेन प्रतियोगिसमानाधिकरणतया स्वविशिष्ट-संबन्धिनिष्ठप्रतियोग्यसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाप्रसिद्धेरत आह । कालिकेति । तथा च स्वावच्छिन्नानधिकरणखण्डकालनिष्ठाभावप्रतियोगितावच्छेदक-तयैव तद्व्यक्तित्वे निरुक्तावच्छेदकत्वं सुलभमिति भावः ।

ननु हेतुमन्निष्ठाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकमात्रस्यैव घट-त्वादिविशिष्टसंबन्धिनिष्ठाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वात्पारिभा-षिकाऽवच्छेदकाप्रसिद्ध्या वन्हिमान् धूमादित्यादावव्याप्तिवारक द्वितीयनिरुक्तौ अभावे प्रतियोगिवैयधिकरण्यं प्रवेश्यताम्, अवच्छेद्यत्वघटिततृतीयनिरुक्तावपि हेतुमन्निष्ठा-

## लक्ष्मीः

महाकाले इति यावत्। **प्रतियोगितावच्छेदकत्वाप्रसिद्धेरिति ।** तदप्रसिध्द्या तादृशप्रतियोगितानवच्छेदकत्वस्याप्यप्रसिद्धेरिति भावः । कालिकेन यथा गोसंबन्धी महाकालस्तथा खण्डकालोपीत्याशयेनाह । **तथा चेति ।** प्रतियोगिवैयधिकरण्यनिवेशे चेत्यर्थः । स्वं–खण्डकाला-समानकालीनतत्तव्द्यक्तित्वम् । **तद्व्यक्तित्वे।** खण्डकालासमानकालीन-तद्व्यक्तित्वे । **निरुक्तेति ।** स्वविशिष्टसंबन्धिनिष्ठप्रतियोग्यसमानाधि-करणाभावप्रतियोगितानिरूपितेत्यर्थः । **सुलभमिति ।** तथा च गोमान् महाकालत्वादित्यादौ नाव्याप्तिरिति भावः ।

शङ्कते । **नन्विति । हेतुमन्निष्ठेति ।** धूमादिमन्निष्ठेत्यर्थः । **प्रतियोगितावच्छेदकमात्रस्यैव ।** यावत्प्रतियोगितावच्छेदकस्यैवे-त्यर्थः । **संयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वादिति ।** संयोगेन वस्तुमात्रस्याव्याप्यवृत्तित्वादिति भावः । **द्वितीयनिरुक्तौ।** हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यद्धर्मविशिष्टसंबन्धिनिष्ठाभाव प्रतियोगितानवच्छेदकं स एव धर्मः परिभाषिकावच्छेदक इति निरुक्तौ । **अभावे ।** यद्धर्मविशिष्टसंबन्धिनिष्ठाभावे । **प्रतियोगिवै-यधिकरण्यं ।** साध्यतावच्छेदसंबन्धेन स्वप्रतियोगितावच्छेदकाव-च्छिन्नासंबन्धियद्धर्मविशिष्टसंबन्धिनिष्ठत्वं । **प्रवेश्यतां ।** प्रवेशे तु न वह्निमान् धूमादित्यादौ पारिभाषिकावच्छेदकाप्रसिद्ध्याऽव्याप्तिः,

न च मौलमिदमीयं च प्रतियोगिवैयधिकरण्यमनुपादेयम्,

भावप्रतियोगितासामान्ये एव धूमत्वविशिष्टसंबन्धिनिष्ठाभावीयसंयोगसंबन्धावच्छिन्न-प्रतियोगितानवच्छेदकीभूतगोत्वत्वावच्छेद्यत्वाभावाद् धूमवान् वन्हेरित्यादावतिव्याप्ति-वारणायाभावे तद्विशेषणं दीयताम्, प्रथमनिरुक्तौ तु प्रतियोगिवैयधिकरण्यमभाव-विशेषण किमर्थमित्याशङ्कते नचेति ।

लक्ष्मीः

घटत्वादेरेव घटत्वविशिष्टसंबन्धिनिष्टप्रतियोगिव्यधिकरणाभाव-प्रतियोगितानवच्छेदकत्वात् । **तृतीयनिरुक्तौ** । हेतुमन्निष्ठ-प्रतियोगिव्यधिकरणाभावप्रतियोगितासामान्ये साध्य-तावच्छेदकयद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकधर्मा-वच्छिन्नत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावस्तद्धर्मा-वच्छिन्नसामानाधिकरण्यमिति निरुक्तौ । **गोत्वत्वाद्यवच्छेद्य-त्वाभावादिति** । आदिना घटाभावत्वस्य परिग्रहः । गुरुतयोक्तक्रमेण तादृशोभयत्वावच्छिन्नाभावाऽप्रसिध्याऽतिव्याप्तिवारणे तुल्ययुक्त्या वन्हिमान् धूमादित्यादौ अव्याप्तिर्बोध्या । **अभावे** । साध्यवन्निष्ठा-भावे । **तद्विशेषणं** । प्रतियोगिवैयधिकरण्यविशेषणम् । **दीयतामिति** । दत्ते तु धूमत्वे धूमवन्निष्ठप्रतियोगिव्यधिकरणघटाभावप्रतियोगितान-वच्छेदकत्वं सुलभमेवेति भावः । **प्रथमनिरुक्तौतु इति** । हेतुमन्निष्ठा-भावप्रतियोगितावच्छेदकावच्छिन्नाभाववति असंबद्धं यद्धर्मविशिष्ट-सामान्यं तदेव पारिभाषिकावच्छेदकमिति प्रथमनिरुक्तौ तु इत्यर्थः । **अभावविशेषणमिति** । तादृशप्रतियोगितावच्छेदकावच्छिन्नाभावविशे-षणमित्यर्थः । **किमर्थमिति** । अत्र तदनिवेशे मूलेपि तन्निवेशानीयं प्रयोजनाभावादित्याशयः । **दीधितौ** । **नचेति** । **मौलं** । मूलोपात्तं । **इदमीयम्** । अवच्छेदकलक्षणे प्रविष्टं । नचेदमीयप्रतियोगिवैयधि-करण्याप्रवेशे एव मौलप्रतियोगिवैयधिकरण्यस्यानिवेश इति 'इदमीयं मौलंचेति' क्रमेण लिखनमुचितमिति वाच्यम् । एकदोभयखण्डने तथा क्रमस्याऽकिञ्चित्करत्वात् । **अन्यथा** । मूले प्रतियोगिवैयधिकर-

संयोगत्वाद्यवच्छिन्नाभाववति संयोगत्वादिविशिष्टस्य वृत्तेः, गुणादिनिष्ठाभावप्रतियोगितावच्छेदकद्रव्यत्वत्व, द्रव्यमात्रसमवेतत्वाद्यवच्छिन्नाभाववति चाऽवृत्तेरव्याप्त्यतिव्याप्त्योरनवकाशादिति वाच्यम् ।

धूमवान् वन्हेरित्यादावतिव्याप्तेः ।

वाच्यमिति परेणान्वयः । संयोगी द्रव्यत्वादित्यादावव्याप्तिवारण मौलस्य फलमन्यथोपपादयति । संयोगत्वावच्छिन्नेति । वृत्तेरिति । अव्याप्त्यनवकाशादित्यग्रेऽन्वयः । सयोगी सत्वादित्यादावव्याप्तिवारणमिदमीयस्य फलमन्यथा कुरुते । गुणादीति । द्रव्यत्वत्वं द्रव्यान्यासमवेतत्वविशिष्टसकलद्रव्यसमवेतत्वम्, तच्च न समवायेनाभावस्य प्रतियोगितावच्छेदकम्, लाघवेन द्रव्यान्यासमवेतत्वस्यैव तत्वा-

## लक्ष्मीः

ख्यानिवेशेपि । उपपादयतीति । अव्याप्तिवारणं करोतीत्यर्थः । वृत्तेरिति । अस्याऽव्याप्त्यनवकाशादित्यनेनाऽन्वयः । तथा च संयोगत्वस्य द्रव्यत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वेपि संयोगत्वावच्छिन्नाभाववति संयोगत्वविशिष्टस्य संबद्धत्वात्संयोगत्वस्य न पारिभाषिकावच्छेदकत्वं, तादृशञ्चावच्छेदकं गगनत्वादिकमेवेति तद्भिन्नत्वस्य संयोगत्वे सत्वान्नाव्याप्तिरिति भावः। दीधितौ । द्रव्यत्वत्वेति । तथा च सत्ताधिकरणगुणादिनिष्ठप्रतियोगिव्यधिकरणसंयोगाभावप्रतियोगितावच्छेदकसंयोगत्वावच्छिन्नाभाववति 'द्रव्ये' संयोगत्वविशिष्टस्य संबद्धत्वेपि गुणादिनिष्ठाभावप्रतियोगितावच्छेदकीभूतद्रव्यत्वत्वावच्छिन्नाभाववति असंबद्धत्वात्संयोगत्वस्य पारिभाषिकावच्छेदकत्वान्न संयोगी सत्वादित्यत्रातिव्याप्तिरिति भावः । द्रव्यसमवेतत्वघटितस्य द्रव्यमात्रसमवेतत्वस्यापि द्रव्यान्यासमवेतत्वापेक्षया गुरुत्वान्नावच्छेदकत्वमतो व्याचष्टे। द्रव्यान्यासमवेतत्ववेति। दीधितौ। द्रव्यमात्रसमवेतत्वादीति । आदिना व्यभिचारनिरूपकाधिकरणगुणावृत्तित्वपरिग्रहः । दीधितौ । धूमवान् वन्हेरित्यादावतिव्याप्तिरिति ।

न हि उत्पत्तिकालावच्छेदेनापि महानसादौ किञ्चित्संयोगेन वर्तते, येन वन्हिमदयोगोलकनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकायोगोलकावृत्तिद्रव्यत्वावच्छिन्नाभाववदवृत्तित्वं धूमत्वविशिष्टस्य सम्भाव्येत ।

दित्यतस्तथैवाह । द्रव्यमात्रेति । द्रव्यान्यासमवेतत्वमित्यर्थः । अवृत्तेरिति । अतिव्याप्त्यनवकाशादिति योजना । धूमवानिति । संयोगेन द्रव्याणामव्याप्यवृत्तितया धूमत्वावच्छिन्नाभाववत्यपि धूमत्वादिविशिष्टस्य सत्त्वादिति भावः ।

ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं यदयोगोलकाऽसंयुक्तत्वं धूमत्वविशि-

## लक्ष्मीः

प्रथमनिरुक्तिघटकप्रतियोगितावच्छेदकावच्छिन्नाभावे प्रतियोगिवैयधिकरण्याऽप्रवेशे इत्यादिः। **धूमत्वावच्छिन्नाभाववत्यपीति** । वह्निमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतधूमत्वावच्छिन्नाभाववति "उत्पत्तिकालावच्छिन्न" पर्वतादौ इत्यर्थः । **सत्वात्** । संबद्धत्वात् । तथा च तदसंबद्धगगनत्वादिभिन्नत्वस्य धूमत्वे सत्वादतिव्याप्तिरिति भावः । **नन्विति** । **तदवच्छिन्नाभाववदवृत्तित्वादेवेति** । अयोगोलकाऽसंयुक्तत्वावच्छिन्नाभाववति अयोगोलकेऽसंबद्धत्वादेवेत्यर्थः । **नातिव्याप्तिरिति** । तथा च प्रथमनिरुक्ति घटक प्रतियोगितावच्छेदकावच्छिन्नाभावे प्रतियोगिवैयधिकरण्यं व्यर्थमेवेति भावः । अतिव्याप्तिं दर्शयति । **नहीति** । **किंचित्संयोगेन वर्तते** इति । तथा चाऽयोगोलकाऽसंयुक्तत्वावच्छिन्नाभावो अयोगोलके इव महानसादावपि वर्तते इति अयोगोलकाऽसंयुक्तत्वावच्छिन्नाभाववति महानसादौ धूमत्वविशिष्टस्य संबद्धत्वाद् धूमत्वस्य पारिभाषिकावच्छेदकत्वमनुपपन्नमिति तादृशावच्छेदकं गगनत्वादिकमेव तद्भिन्नत्वस्य धूमत्वे सत्वादतिव्याप्तिरितिभावः । **येनेत्यादि** । यदि महानसादौ उत्पत्तिकालवच्छेदेनापि संयोगेन किञ्चिद्वर्तते तदाऽयोगोलकावृत्तिद्रव्यत्वावच्छिन्नाभाववदयोगोलक एव स्यान्न तु धूमवन्महानसादिः, येन तत्र-

ष्टस्य तदवच्छिन्नाभाववदवृत्तित्वादेव नातिव्याप्तिरत आह । **नहीति** । इत्थञ्चा-वच्छेदकत्वनिरुक्तौ प्रतियोगिवैयधिकरण्यप्रवेशे मूलोक्तहेतुसमानाधिकरणाभावेपि तदावश्यकम्, हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतसंयोगत्वावच्छिन्नाभावस्य प्रति-योगिवैयधिकरण्यावच्छिन्नस्याधिकरणे गुणादौ संयोगत्वादिविशिष्टस्याऽवृत्तेः सयोगी-द्रव्यत्वादित्यादावव्याप्तिरिति भावः ।

## लक्ष्मीः

"अयोगोलके" धूमत्वविशिष्टस्याऽसंबद्धत्वाद् धूमत्वस्यावच्छेदकत्वं स्यादिति भावः । अयोगोलकावृत्तिद्रव्यत्वेत्यत्र द्रव्यत्वपदं संयोगसं-बन्धेनायोगोलकावृत्तित्वस्य, संयोगसंबन्धावच्छिन्नप्रतियोगितायाश्च लाभाय । प्रतियोगिवैयधिकरण्यनिवेशे तु अयोगोलकावृत्तिद्रव्यत्वा वच्छिन्नाऽसंबन्धी अयोगोलकावृत्तिद्रव्यत्वावच्छिन्नाभाववानयोगोलक एव तत्र च धूमत्वविशिष्टस्याऽसंवद्धत्वान्नातिव्याप्तिः ।

**इत्थंचेति** । धूमवान् वह्नेरित्यत्रातिव्याप्तिवारणार्थं चेत्यर्थः । **तदावश्यकमिति** । प्रतियोगिवैधिकरण्यनिवेशनमावश्यकमित्यर्थः । हेतुसमानाधिकरणायोगोलकभेदाभावस्य प्रतियोगितावच्छेदकं यद-योगोलकभेदत्वं तदवच्छिन्नाभाववति अयोगोलके धूमत्वविशिष्ट-स्याऽसंबद्धत्वात्क धूमवान् वन्हेरित्यत्रातिव्याप्तिरिति विभावनीयम् ।

केचित्तु समवायेन वन्ह्यभावमादायाऽव्याप्तिवारणाय प्रतियोगि-तायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशे वृत्त्यनियामकसंबन्धे-न साध्यतास्थले साध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगित्वाप्रसि-ध्द्याऽव्याप्तिवारणाय साध्यतावच्छेदकसंबन्धेन प्रतियोगिवैयधिक-रण्यनिवेशनमावश्यकमित्याहुः ।

**अन्यथा** । मूलोक्तलक्षणघटकाभावे प्रतियोगिवैयधि-कण्यानिवेशे । **हेतुमन्निष्ठेति** । द्रव्यत्वसमानाधिकरणेत्यर्थः । **अवृत्तेरिति** । असंबद्धत्वादित्यर्थः । तन्निवेशे तु संयोगाभावस्य प्रति-योगिसमानाधिकरणतयाऽभावान्तरमादाय नाव्याप्तिरिति भावः । **लाघवमभिप्रेत्येति** । तथा च प्रतियोगिवैयधिकरण्यानुपादानेपि प्रतियोगितयोर्लघुभूतैकसंबन्धावच्छिन्नत्वादिनिवेशेनैवोपदर्शितातिव्या-

प्रतियोगितयोरेकसंबन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा विवक्षणे पुनरनुपादेयमेव प्रतियोगिवैयधिकरणद्वयम् ।

लाघवमभिप्रेत्याह । प्रतियोगितयोरिति । मौलेदमीयप्रतियोगितयोरित्यर्थः । तथा च हेतुमन्निष्ठाभावीययद्यत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नतत्तत्संबन्धावच्छिन्नप्रतियोगिताकाभाववदसंबद्धस्वविशिष्टसामान्यकत्वं प्रथमस्य ।

## लक्ष्मीः

व्याप्तिवारणसंभवे गुरुभूतप्रतियोगिवैयधिकरण्योपादानमनुचितमित्यालोच्येत्यर्थः ।

केचित्तु संबन्धभेदनिबन्धनदोषवारणाय प्रतियोगितयोः साध्यतावच्छेदकसंबन्धावच्छिन्नत्वनिवेशस्यावश्यकतया वृत्त्यनियामकसंबन्धेन साध्यतायामतिव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यद्वयं सार्थकमित्यभिप्रायकं मूलमुपपाद्य तादृशप्रतियोगितायां साध्यतावच्छेदकसंबन्धावच्छिन्नत्वानिवेशे प्रतियोगिवैयधिकरण्यं निरर्थकमित्याशयेनाह । **प्रतियोगितयोरिति** वदन्ति ।

अन्येतु प्रतियोगिवैयधिकरण्यघटितव्याप्तिदुर्ज्ञेया । कस्यचित्प्रतियोगिनः सर्वत्र हेत्वधिकरणे सत्वेन स्वप्रतियोग्यनधिकरणत्वस्यावश्यं वाच्यतया स्वत्वस्य तत्तद्व्यक्तिविश्रान्तत्वादित्याशयेन प्रतियोगिवैयधिकरण्याऽघटितां व्याप्तिमाह । प्रतियोगितयोरित्यादिनेत्याहुः ।

**तथा च** । एकसंबन्धावच्छिन्नत्वनिवेशे च । **प्रथमस्य** । तादृशप्रतियोगितावच्छेदकावच्छिन्नाभाववदसंबद्धस्वविशिष्टसामान्यकत्वस्य । अर्थ इत्यनेनान्वयः । हेतुसमानाधिकरणाभावीययद्यत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नतत्तत्संबन्धावच्छिन्नप्रतियोगिताकाभाववति असंबद्धं यद्धर्मविशिष्टसामान्यं स धर्मः पारिभाषिकावच्छेदकः इति समुदितार्थः । तथा च वन्हिसमानाधिकरणाभावीय स्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतधूमाधिकरणतात्वावच्छिन्नाभाववति अयोगोलके धूमत्वविशिष्टस्याऽसंबद्धत्वाद् धूमवान् वह्नेरित्यादौ नातिव्याप्तिः । वन्हिसमानाधिकरणाभावी-

द्वितीयस्य तु स्वविशिष्टसंबन्धिनिष्ठाभावीययद्यत्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकीभूतहेतुसमानाधिकरणाभावीयतत्तत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वमर्थः ।

## लक्ष्मीः

यसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतधूमत्वावच्छिन्नाभाववति पर्वतादौ धूमत्वविशिष्टस्य संबद्धत्वादुक्तस्थलेऽतिव्याप्तिवारणाय **यद्यदिति** । तथा च यद्यत्संबन्धान्तर्गतस्वरूपेण धूमाधिकरणत्वाभावमादायोक्तरीत्या नातिप्रसंगः । स्वरूपेण धूमत्वावच्छिन्नाभाववति पर्वतादौ धूमत्वविशिष्टस्य संबद्धत्वादतिव्याप्तितादवस्थ्यमतो **यत्किञ्चिदिति** धर्मविशेषणम् । तथा च धूमाधिकरणतात्वरूपयत्किञ्चिद्धर्ममादायैव नातिव्याप्तिः । वन्हिमान् धूमादित्यादौ घटाधिकरणत्वाभावमादाय लक्षणसमन्वयो बोध्यः ।

**द्वितीयस्य तु** । द्वितीयस्य पारिभाषिकावच्छेदकलक्षणस्य तु । अर्थ इति परेणान्वयः । **स्वविशिष्टेति** । स्वं—पारिभाषिकावच्छेदकत्वेनाभिमतम् । तथा च हेतुमन्निष्ठाभावीययद्यत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकं स्वविशिष्टसंबन्धिनिष्ठाभावीयतत्तत्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकं एवंभूतं यत्स्वं तदेव पारिभाषिकावच्छेदकमिति पर्यवसितमिव । स्वविशिष्टसंबन्धिनिष्ठाभावीययद्यत्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकं हेतुमन्निष्ठाभावीयतत्तत्संबन्धावच्छिन्नप्रतियोगितावच्छेदकमित्यपि संभवतीत्यभिप्रायेणाभिहितम् । संयोगेन द्रव्यस्याव्याप्यवृत्तितया घटत्वविशिष्टसंबन्धिनिष्ठाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकं गोत्वत्वं तच्च न धूमवन्निष्ठाभावीयसंयोगसंबन्धावच्छिन्नप्रतियोगितावच्छेदकमिति रीत्या पारिभाषिकावच्छेदकाप्रसिद्धिरतोयद्यदिति । तथा च स्वरूपेण घटाधिकरणतात्वमादाय लक्षणसमन्वयः ।

हेतुसमानाधिकरणाभावीयतत्संबन्धावच्छिन्नप्रतियोगितासामान्ये स्वविशिष्टसंबन्धिनिष्ठाभावीयतत्संबन्धावच्छिन्नप्रतियोगितानवच्छेदकावच्छेद्यत्वाभाव इति तृतीयस्यार्थो बोध्यः । धूमवान्वह्नेरित्यादौ हेतुसमानाधिकरणाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतायोगोलकभेदत्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभाव -

तत्तत्संबन्धावच्छिन्नत्वपर्यवसन्नस्यैकसंबन्धावच्छिन्नत्वस्याननुगमाद्विशेषणताविशेषावच्छिन्नत्वप्रवेशावश्यकत्वेन संबन्धान्तरप्रवेशे गौरवात्तदपेक्षया लाघवाच्चाह विशेषणतेति ।

## लक्ष्मीः

वति अयोगोलके धूमत्वविशिष्टस्याऽसंबद्धत्वान्नावच्छेदकत्वक्षतिः।यत्त्व तत्त्वयोरननुगमात् , विशिष्यतत्तत्संबन्धानां निवेशे विशेषणताविशेषस्यापि निवेशात्,तन्निवेशादेव सामंजस्ये संबन्धान्तरप्रवेशो व्यर्थ इत्याह। **तत्तत्संबन्धावच्छिन्नत्वपर्यवसन्नस्येति । विशेषणतेतीति** । तथा च हेतुमन्निष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभाववति असंबद्धं यद्धर्मविशिष्टसामान्यमिति प्रथमस्य, द्वितीयस्यतु हेतुमन्निष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकं स्वविशिष्टसंबन्धिनिष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकं यत्स्वं तद्भिन्नमर्थः ।

अथ संयोगेन वह्निसाध्यकसद्धेतौ तादृशप्रतियोगितयोः समवायसंबन्धावच्छिन्नत्वनिवेशेप्युपपत्तिः संभवति, तथा हि । हेतुमन्निष्ठाभावीयसमवायावच्छिन्नप्रतियोगितावच्छेदकीभूतवह्नित्वावच्छिन्नसमवायावच्छिन्नप्रतियोगिताकाभाववति पर्वतादौ वह्नित्वविशिष्टस्य संबद्धत्वान्न तस्य पारिभाषिकावच्छेदकत्वम् । धूमवान् वह्नेरित्यादौ च वह्निमन्निष्ठाभावीयसमवायावच्छिन्नप्रतियोगितावच्छेदकं अयोगोलकासमवेतत्वं तदवच्छिन्नसमवायावच्छिन्नप्रतियोगिताकाभाववति अयोगोलके धूमत्वविशिष्टस्याऽसंबद्धत्वादतिव्याप्तेरभावात् इति चेन्न । अयोगोलकभिन्नं वन्हेरित्यादौ वन्हिमदयोगोलकनिष्ठाभावीयसमवायावच्छिन्नप्रतियोगितावच्छेदकं अयोगोलकभेदत्वं तदवच्छिन्नसमवायावच्छिन्न प्रतियोगिताकाभाववति घटादौ अयोगोलकभेदस्य संबद्धत्वान्न पारिभाषिकावच्छेदकत्वमित्यतिव्याप्तिवारणाय प्रतियोगितयोःस्वरूपसंबन्धावच्छिन्नत्वं निवेशनीयम् , तथा च सर्वत्र तन्निवेश एवोचितः, सर्वत्रानुमितौ एकजातीयग्रहस्यैव हेतुत्वौचित्यात् ।

स्वरूपसंबन्धेन वृत्तिमन्मात्रस्यैवाऽव्याप्यवृत्तित्वभ्रमकालेऽनुमित्युपपत्तये प्रतियोगिवैयधिकरण्यघटितव्याप्तिग्रहस्यापि आवश्यकतया

## लक्ष्मीः

सर्वत्रैवानुमितौ एकजातीयग्रहहेतुत्वस्य वक्तुमशक्यतया वह्निमान्धूमादित्यादौ तादृशप्रतियोगितयोः समवायसंबन्धावच्छिन्नत्वमेव निवेश्यम् विशेषणताविशेषावच्छिन्नत्वस्य वेति वाकारोऽनास्थायाम्, तस्माद्वास्तवव्याप्तिलक्षणे एव प्रतियोगिवैयधिकरण्यं न देयमित्यस्मद् परमगुरवः।

ननु दीधितौ प्रथमनिरुक्तावेव धूमवान् वन्हेरित्यादावतिव्याप्तिवारणाय प्रतियोगिवैयधिकरण्यनिवेशस्य पूर्वमुपदर्शिततया तदनुपादाने तल्लक्षणे एवातिव्याप्तिनिराकरणप्रकारप्रदर्शनस्योचितत्वेन 'यत्राधिकरणे व्यभिचारः' इत्यादिना मध्यमलक्षणे तन्निवारणप्रकारप्रदर्शनं दीधितावनुपपन्नमिति चेन्न। जातिमान् भावत्वादित्यत्र भावत्वसमानाधिकरणाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगिता - वच्छेदकं जातिमत्वप्रकारकप्रमाविशेष्यत्ववत्वं तदवच्छिन्नाभाववति सामान्यादौ साध्यतावच्छेदकसमवायेन संबद्धत्वाप्रसिध्या सत्तात्वं न हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकं किन्तु घटत्वादिकमेवेति सत्तात्वस्य पारिभाषिकावच्छेदकत्वाभावादतिव्याप्तेरूपदर्शितत्वेनैतद्दोषेणैवैतल्लक्षणस्य पूर्वं परित्यक्ततया तत्रातिव्याप्तिनिराकरणप्रदर्शनमनुपयुक्तमिति द्वितीयलक्षणस्यैवोपादेयत्वेन तत्र निर्दोषत्वप्रदर्शनार्थं यत्रेत्यादिनाऽतिव्याप्तिनिराकरणं युक्तमेव। न च तथापि द्वितीयलक्षणे प्रतियोगिवैयधिकरण्यानुपादाने संयोगेन साध्यतायां पारिभाषिकावच्छेदकाप्रसिद्ध्याऽतिव्याप्तेरभावेनाऽव्याप्तेरेव पूर्वमुक्ततयाऽप्रसक्ताया अतिव्याप्तेर्निराकरणे 'प्रसक्तं हि प्रतिषिध्यते' इति नियमविरोध इति वाच्यम्। तादृशनियमस्यैवाऽसिद्धेः। व्यक्तं च नव्यवाद दीधितौ। जलह्रदे वन्हिर्नास्तीत्यादौ जलह्रदादावप्रसक्तस्यापि वन्हेर्निषेधादित्यादिना। प्रतियोगिवैयधिकरण्याप्रवेशे प्रथमनिरुक्तौ धूमवान् वन्हेरित्यादौ तदयोगोलकभेदाभावमादाय नातिव्याप्तिः, वन्हिमन्निष्ठाभावीयस्वरूपसंबन्धावच्छिन्न प्रतियोगितावच्छेदकं यत्तदयोगोलकभेदत्वं तदवच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभाववति अयोगोलके धूमत्वविशिष्टस्याऽसंबद्धत्वात्।

**यत्राधिकरणे व्यभिचारस्तदन्यत्वत्व, तदन्यत्वप्रकारकप्रमाविषयत्वत्व, साध्यवत्वप्रकारकप्रमाविषयत्वत्वादीनां साध्यतावच्छेदकविशिष्टसाध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकत्वात्, हेतुतावच्छेदकविशिष्टहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वाच्चातिव्याप्तेरनवकाशात्।**

---

अभावीयविशेषणताया लक्षणघटकत्वमभिप्रेत्याह। तदन्यत्वत्वेति। प्रमाविषयत्वीयविशेषणतायास्तथात्वमभिप्रेत्याह तदन्यत्वप्रकारकेति। साध्यवत्वस्यावश्यकोपस्थिकतया तद्घटितधर्मस्योपस्थितिलाघवात्तमादायैवातिव्याप्तिवारणं सुघटमित्याशयेनाह। साध्यवत्वेत्यादि।

---

## लक्ष्मीः

द्वितीयनिरुक्तावपि तत्राऽतिव्याप्तिं वारयति दीधितौ। **यत्राधिकरणेइति। तदन्यत्वत्वेति।** अयोगोलकभेदत्वस्येत्यर्थः। धूमवन्निष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकत्वात्, वन्हिमन्निष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकत्वाच्चेति भावः। ननु लक्षणेऽभावीयविशेषणताविशेषस्य प्रवेशे घटत्ववान् घटतद्भिन्नान्यतरत्वादित्यत्राऽन्यतरत्वाधिकरणे घटभिन्ने वर्तते यो घटभिन्नभेदाभावस्तस्य प्रतियोगी घटभिन्नभेदस्तस्य घटत्वात्मकतया साध्यवन्निष्ठत्वेऽपि तदभावस्यापि साध्यवन्निष्ठत्वम् "स्वरूपेण घटत्वात्मकप्रतियोगिनोऽवृत्तेः, तस्य तद्वयधिकरणसंबन्धत्वात्" तथा च हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकस्य घटभिन्नभेदत्वस्य साध्यतावच्छेदकविशिष्टसाध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकत्वविरहादतिव्याप्तिरत आह। **प्रमाविषयत्वीयविशेषणताया इति। तथात्वं।** लक्षणघटकत्वं। **दीधितौ। तदन्यत्वप्रकारकेति।** व्यभिचारनिरूपकाधिकरणभेदप्रकारकेत्यर्थः। अयोगोलकान्यत्वप्रकारकेति यावत्। **साध्यवत्वस्यावश्योपस्थितिकतयेति।** साध्यतावच्छेदकविशिष्टवन्निष्ठाभावेत्यादिज्ञाने साध्यवत्वोपस्थितिः कारणमिति भावः। **तद्घटितधर्मस्योपस्थितिलाघवा-**

ननु एव हेतुमन्निष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टसंबन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितानवच्छेदकीभूतधर्मावच्छेद्यत्व, साध्यतावच्छेदकसंबन्धावच्छिन्नत्वोभयाभावः, साध्यतावच्छेदकसंबन्धेन तद्धर्मावच्छिन्नो हेतुव्यापक इत्युक्त क्रमेण तृतीयार्थः फलितः। तथा च विशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये एव साध्यतावच्छेदकीभूतसंयोगसंबन्धावच्छिन्नत्वाभावेन तादृशोभयाभावसत्त्वाद् धूमवान् वन्हेरित्यादावतिव्याप्तिः। न च हेतुमन्निष्ठाभावप्रतियोगितायां विशेषणताविशेषावच्छिन्नत्वं न देयमिति वाच्यम्। वन्हिमत्वप्रकारकप्रमाविशेष्यत्वादीनां संयोगादिसंबन्धेनाभावस्य हेतुमति सत्त्वाद्वन्हिमान् धूमादित्यादौसर्वत्रैवाव्याप्तिप्रसंगादित्यतः साध्यतावच्छेदकसंबन्धावच्छिन्नत्वांशपरित्यागेन तृतीयस्यार्थंनिष्कृष्य दर्शयति तथाचेत्यादिना।

## लक्ष्मीः

**दिति।** व्यभिचारनिरूपकाधिकरणान्यत्वप्रकारकप्रमाविषयत्वस्य भेदघटिततया साध्यवत्वप्रकारकप्रमाविषयत्वस्य तदघटिततयापि लाघवं बोध्यम्। **तमादायैवेति।** साध्यवत्वप्रकारप्रमाविषयत्वत्वमादायैवेत्यर्थः। एवकारेण तदन्यत्वत्वादिधर्मव्यावृत्तिः। **सुघटमिति।** वन्हिमन्निष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकधूमवत्त्वप्रकारकप्रमाविशेष्यतात्वावच्छिन्नस्वरूपसंबन्धावच्छिन्नप्रतियोगिताकाभाववति अयोगोलके धूमत्वविशिष्टस्याऽसंबद्धत्वादतिव्याप्तिवारणं सुकरमिति भावः। साध्यवत्त्वं च साध्यतावच्छेदकसंबन्धेन बोध्यम्। **एवं।** विशेषणताविशेषसंबन्धावच्छिन्नत्वविवक्षणे। **यद्धर्मेति।** यत्पदं साध्यतावच्छेदकपरम्। **तथा च।** उक्तार्थे च। **विशेषणताविशेषावच्छिन्ने एवेति।** तत्संबन्धावच्छिन्नप्रतियोगित्वमात्रे। **तादृशोभयाभावसत्त्वादिति।** संयोगसंबन्धावच्छिन्नत्व—धूमत्वविशिष्टसंबन्धिनिष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकधूमाधिकरणतात्वावच्छिन्नत्वोभयाभावसत्त्वादित्यर्थः। **न देयमिति।** तथा च वह्निमन्निष्ठाभावीयसंयोगसंबन्धावच्छिन्नधूमाधिकरणत्वनिष्ठप्रतियोगितायामुक्तोभयस्यैव सत्त्वान्नातिव्याप्तिरिति भावः। **वह्निमत्त्वप्रकारकप्रमाविशेष्य-**

तथा च विशेषणताविशेषावच्छिन्नयद्धर्मविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यत्वं, तत्संबन्धावच्छिन्नसाधनसमानाधिकरणात्यन्ताभावप्रतियोगितासामान्ये नास्ति साधने तद्धर्मविशिष्टसामानाधिकरण्यं व्याप्तिरिति पर्यवसितोर्थः।

## लक्ष्मीः

त्वादीनामिति। आदिना वन्ह्यधिकरणत्वस्य परिग्रहः। हेतुमति। पर्वते। सत्त्वादिति। केवलान्वयित्वादिति भावः। सर्वत्रैवाऽव्याप्तिप्रसंगादिति। धूमवन्निष्ठाभावीयसंयोगावच्छिन्नवन्ह्यधिकरणत्वनिष्ठप्रतियोगितायां संयोगावच्छिन्नत्व, वन्ह्यधिकरणतात्वावच्छिन्नत्वोभयोः सत्वादिति भावः। अतः। अव्याप्तिवारणायेति भावः। तथा चेति। विशेषणताविशेषस्यलक्षणघटकत्वेचेत्यर्थः। धूमवान् वन्हेरित्यादौ वन्हिसमानाधिकरणाभावीय स्वरूपसंबन्धावच्छिन्नधूमाधिकरणत्वनिष्ठप्रतियोगितायां धूमत्वविशिष्टसंबन्धिपर्वतादिनिष्ठाभावप्रतियोगितानवच्छेदकधूमाधिकरणतात्वावच्छिन्नत्वस्यैव सत्वान्नातिव्याप्तिः। वन्हिमान् धूमादित्यादौ धूमसमानाधिकरणाभावीयघटाधिकरणत्वनिष्ठप्रतियोगितायां वन्हिसमानाधिकरणाभावीयप्रतियोगितानवच्छेदक वन्ह्यधिकरणतात्वावच्छिन्नत्वविरहाल्लक्षणसमन्वयः। अत्रेति। धूमवान् वन्हेरित्यादौ वन्हिसमानाधिकरणघटाधिकरणत्वाभावप्रतियोगितायां धूमवन्निष्ठाभावप्रतियोगितानवच्छेदक धूमाधिकरणतात्वावच्छिन्नत्वाभावादतिव्याप्तिरतः प्रतियोगितासामान्ये इति। तथा च धूमाधिकरणत्वनिष्ठप्रतियोगितायां तदवच्छिन्नत्वाभावाऽसत्वान्नातिव्याप्तिः। अथ हेतुसमानाधिकरणाभावप्रतियोगितासामान्ये विशेषणताविशेषावच्छिन्नत्व, साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकावच्छिन्नत्वोभयाभाव एव निवेश्यतां किं हेतुसमानाधिकरणाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये साध्यवन्निष्ठाभावप्रतियोगितानवच्छेदकावच्छिन्नत्वाभावनिवेशेन। नचोभयत्वनिवेशे गौरवान्नतन्निवेश इति वाच्यम्। साध्यतावच्छेदकसंबन्धावच्छिन्नत्वपरिग्रहेपि उभयाभावनिवेशे गौरवस्य तुल्यत्वादिति चेन्न। सिद्धान्तलक्षणे प्रतियो-

यद्धर्मेति । यत्पदं साध्यतावच्छेदकपरम् । तत्संबन्धावच्छिन्नेति । विशेषणता-विशेषसंबन्धावच्छिन्नेत्यर्थः । अत्र प्रतिपदव्यावृत्तिरुक्तदिशा बोध्या ।

न च निरुक्तं प्रतियोगितासामान्ये यद्धर्मविशिष्टसंबन्धिनिष्ठाभावीयविशेषणता-विशेषावच्छिन्नप्रतियोगितावच्छेदकावच्छेद्यत्वं साधने तद्धर्मावच्छिन्नसामानाधिकरण्य-

## लक्ष्मी

गितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितासामान्ये यद्धर्मावच्छिन्नत्वाभाव इति रीत्याऽनुयोगितावच्छेदककोटौ साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमात्रनिवेशे कालो घटवान् कालपरिमाणादित्यत्र प्रतियोगितावच्छेदकसंबन्धेन प्रतियोग्यनधिकरणहेतुमन्निष्ठाभावीयसाध्यतावच्छेदकसंबन्धावच्छिन्नप्रतियोगिताया अप्रसिध्याऽव्याप्तिःस्यादित्यनुयोगितावच्छेदक कोटौ साध्यतावच्छेदकसंबन्धावच्छिन्नत्वमनिवेश्य प्रतियोगितावच्छेदक कोटौ तन्निवेश्याऽगत्या गौरवमङ्गीकृत्योभयाभावो विवक्षितः । विशेषणताविशेषावच्छिन्नत्वनिवेशे च तत्र कालान्यत्वप्रकारकप्रमाविशेष्यत्वाभावप्रतियोगिताया एव तादृश्याः प्रसिध्याऽव्याप्त्यभावेनानुयोगितावच्छेदककोटावेव तदवच्छिन्नत्वं निवेश्य तादृशानवच्छेदकावच्छेद्यत्वाभावनिवेशेनैव प्रतियोगितावच्छेदककोटौ तन्निवेश्यगुरुभूतोभयाभावनिवेशे प्रयोजनाभावेन तन्निवेशो नोचित इत्याशयेनोभयाभावो न निवेशित इति ध्येयम् ।

नञ्द्वयस्य वैयर्थ्यमाशंकते । **न चेति । निरुक्तप्रतियोगितासामान्ये इति ।** हेतुसमानाधिकरणाभावीयप्रतियोगितासामान्ये इत्यर्थः । यत्तत्पदे साध्यतावच्छेदकपरे । **व्याप्तिरुचितेति ।** धूमवान् वन्हेरित्यादौ वन्हिसमानाधिकरणाभावीयविशेषणताविशेषावच्छिन्नधूमाधिकरणत्वनिष्ठप्रतियोगितायां धूमत्वविशिष्टसंबन्धिनिष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नत्वविरहान्नातिव्याप्तिः । वन्हिमान् धूमादित्यादौ धूमसमानाधिकरणाभावीयस्वरूपसंबन्धावच्छिन्नघटाधिकरणत्वनिष्ठप्रतियोगितायां वन्हित्वविशिष्टसंबन्धिनिष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकघटाधिकरणतात्वावच्छिन्नत्वसत्त्वेन लक्षणसमन्वयः । समाधत्ते ।

मेव लाघवाद्व्याप्तिरुचितेति वाच्यम् । सामान्यपदस्य व्यापकतावाचित्वेन निरुक्त-प्रतियोगितात्वव्यापकतावच्छेदकं यद्धर्मावच्छिन्नवन्निष्ठविशेषणताविशेषावच्छिन्नाभाव-प्रतियोगितावच्छेदकावच्छेद्यतात्वमित्यर्थपर्यवसानेन प्रमेयधूमवान् वन्हेरित्यादावति-व्याप्त्यापत्तेः । प्रमेयधूमत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकावच्छेद्यतात्वस्य गुरु-धर्मतया वन्हिमन्निष्ठाभावप्रतियोगितात्ववन्निष्ठाभावप्रतियोगितानवच्छेदकत्वेन तादृश-प्रतियोगितात्वव्यापकतावच्छेदकत्वात् । अस्माकं तु प्रमेयधूमत्वावच्छिन्नवन्निष्ठाभाव-प्रतियोगितानवच्छेदकं यदयःपिण्डभेदत्वं तदवच्छेद्यत्वाभावस्यैव साधनवन्निष्ठाभाव-प्रतियोगितात्वव्यापकत्वाभावेनाऽतिव्याप्त्यभावात् ।

## लक्ष्मीः

सामान्यपदस्येति । निरुक्तप्रतियोगितात्वव्यापकतावच्छेदक-मिति । हेतुसमानाधिकरणाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगिता-त्ववन्निष्ठाभावप्रतियोगितानवच्छेदकमित्यर्थः । "धूमसमानाधिकरणा-भावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगित्वे वन्हिसमानाधिकरणाभावी-यस्वरूपसंबन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नत्वाभावासत्वा-त्तादृशप्रतियोगितावच्छेदकावच्छिन्नतात्वस्य व्यापकतावच्छेदकत्वम्" । न च निरुक्तप्रतियोगितात्वव्यापकं तादृशावच्छेद्यत्वमित्येव कुतो नो-क्तमिति वाच्यम् । व्यापकत्वस्य तद्वन्निष्ठात्यन्ताभावप्रतियोगितानव-च्छेदकधर्मवत्वरूपतया प्रमेयत्वादिकमादाय व्यभिचारिण्यतिव्याप्तेः । गुरुधर्मतयेति । धूमत्वविशिष्टसंबन्धिनिष्ठाभावीयस्वरूपसंबंधाव-च्छिन्नप्रतियोगितावच्छेदकावच्छिन्नत्वत्वापेक्षयेत्यादिः । तादृशेति ।

हेतुसमानाधिकरणाभावीयस्वरूपसंबन्धावच्छिन्नेत्यर्थः । व्याप-कतावच्छेदकत्वादिति । तथा च प्रमेयधूमत्वघटिततादृशावच्छेद्य-तात्वस्य वन्हिमन्निष्ठाभावप्रतियोगितात्ववन्निष्ठाभावप्रतियोगितानव-च्छेदकत्वेन व्यापकतावच्छेदकतया यद्धर्मपदेन प्रमेयधूमत्वस्य धर्तुं शक्यतयाऽतिव्याप्तिरिति भावः ।

अस्माकंतु । नञ्द्वयप्रवेशे तु । व्यापकत्वाभावेनेति । अयोगो-लकभेदाभावीयाऽयोगोलकभेदनिष्ठप्रतियोगितायां वन्हिमन्निष्ठाभाव प्रतियोगितात्वसत्त्वेन तत्र प्रमेयधूमवन्निष्ठाभावप्रतियोगितानवच्छेद-

यत्र सद्धेतुविशेषे साध्यतावच्छेदकं न प्रतियोगितावच्छेदकं तत्रैवेयं रीतिरुपादेयेत्यपि वदन्ति ।

---

एतेन साधनसमानाधिकरणाभावसामान्ये यद्धर्मावच्छिन्नसमानाधिकरणाभाववत्वं, तादृशाभावप्रतियोगितासामान्ये वा यद्धर्मावच्छिन्नसमानाधिकरणाभावप्रतियोगितात्वं, साधने तद्धर्मावच्छिन्नसामानाधिकरण्यमेव व्याप्तिर्लाघवादित्यपि प्रत्युक्तमिति ध्येयम् ।

साध्यसाधनभेदेन व्याप्तेर्भिन्नतया प्रमेयवन्हित्वादिना गुरुधर्मेण साध्यतास्थले एव साध्यतावच्छेदकावच्छेद्यत्वाप्रसिद्ध्या प्रोक्तक्रमेण व्याप्तिर्वाच्या । वन्हिमान् धूमादित्यादौ तु लघुरूपेण साध्यतास्थले हेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्संबन्धावच्छिन्नत्व, यद्धर्मावच्छिन्नत्वोभयाभावघटितैव सा वक्तव्या, शब्दैक्यस्याऽकिञ्चित्करत्वादित्याह । यत्र सद्धेतु विशेषे इति ।

---

## लक्ष्मीः

कीभूताऽयोगोलकभेदत्वावच्छिन्नत्वाभावस्याऽसत्त्वेनेत्यर्थः । **अतिव्याप्त्यभावादिति ।** अत्रापि प्रमेयवन्हित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यतात्वस्यापि वन्हित्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकावच्छेद्यतात्वापेक्षया गुरुत्वेन तदवच्छिन्नाभावाप्रसिद्ध्या प्रमेयवन्हिमान् धूमादित्यादावव्याप्तिश्चिन्तनीया ।

**एतेन ।** प्रमेय धूमवान् वन्हेरित्यादावतिव्याप्त्या । प्रत्युक्तमित्यनेनान्वयः । प्रमेयधूमत्वावच्छिन्नसमानाधिकरणाभावत्वत्वस्य प्रमेयधूमत्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितात्वत्वस्य वोक्तरीत्या व्यापकतावच्छेदकत्वात् ।

अत्र हेतुसमानाधिकरणाभावसामान्ये यद्धर्मावच्छिन्नवन्निरूपितवृत्तित्वाभावावच्छिन्नप्रतियोगिताकभेदस्तद्धर्मावच्छिन्नसामानाधिकरण्यमित्युक्तौ न दोष इति विभावनीयम् ।

**साध्यसाधनभेदेनेति ।** साध्यसाधनतावच्छेदकसंबन्धभेदेनेत्यपि बोध्यम् । **प्रोक्तक्रमेणेति ।** हेतुमन्निष्ठाभावीयस्वरूपसंबन्धावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टसंबन्धिनिष्ठाभावीयस्वरूपसंबन्धा-

**गौरवप्रतिसन्धानदशायामपि कम्बुग्रीवादिमान्नास्तीति प्रतीतिबलाद् गुरुरपि धर्मोऽवच्छेदकः प्रतियोगितायाः ।**

नव्यमतमुपन्यस्यति । गौरवेति । यादृशप्रतीत्या गुरोरवच्छेदकत्वप्रसिद्धिस्तादृशबुद्धौ गौरवज्ञानस्य यदि विरोधित्वं तदा मानाभावाद् गुरोरवच्छेदकत्वं न स्यात् । नचैतदस्तीति भावः ।

## लक्ष्मीः

वच्छिन्नप्रतियोगितानवच्छेदकधर्मावच्छिन्नत्वाभाव इति क्रमेणेत्यर्थः । **उभयाभावघटितैवेति** । यथाश्रुतोभयाभावघटितैवेत्यर्थः । एवकारेण पारिभाषिकव्यावृत्तिः, सा । व्याप्तिः । **अकिञ्चित्करत्वादिति** । दोषानापादकत्वादित्यर्थः । इतरभेदानुमितौ तत्तद्व्याप्तेः पक्षत्वसंभवान्न भागासिद्धिरिति भावः ।

**नव्यमतमिति** । एतन्मते च कालो घटवान् कालपरिमाणादित्यनुमित्यनुरोधेन सिद्धान्तलक्षणोक्तरीत्या प्रतियोगिताधर्मिकोभयाभावघटितं लक्षणम् । अत्र कम्बुग्रीवादिमान्नास्तीति प्रतीतिर्न गुरोरवच्छेदकत्वसाधिका, गुरोरनवच्छेदकत्ववादिना तादृशप्रतीतेर्भ्रमत्वस्यापि वक्तुं शक्यत्वात् । किन्तु तादृशप्रतीत्यनुपपत्तिरेव तत्साधिका वाच्या, अनुपपत्तिश्च गौरवाऽप्रतिसन्धानदशायां न संभवति, गुरोरनवच्छेदकत्ववादिमतेपि गौरवज्ञानस्यैव प्रतियोगितावच्छेदकत्वग्रहविरोधितया गौरवाऽप्रतिसन्धानदशायां तादृशप्रतीत्यनुपपत्तेरभावात् । **अतोगौरवप्रतिसन्धानदशायामित्युक्तम्** । तथा च तादृशायां गुरोरनवच्छेदकत्वमते तादृशप्रतीत्यनुपपत्तिः, तन्मते गौरवस्य प्रतियोगितावच्छेदकत्वविरोधित्वेन तद्विरोधिज्ञानस्य तद्बुद्धिविरोधित्वेन तदानीं प्रतिबन्धकसत्वेन तादृशप्रतीत्यनुपपत्तिः । गुरोरवच्छेदकत्वे च गौरवज्ञानस्य तत्राप्रतिबन्धकत्वेन न तदनुपपत्तिरिति गुरोरवच्छेदकत्वमावश्यकमिति भावः । गौरवज्ञानमात्रमप्रयोजकम्, अप्रामाण्यज्ञानानास्कन्दितस्यैव विरोधिज्ञानस्य सर्वत्र प्रतिबन्धकत्वादिति, अप्रामाण्यज्ञानानास्कन्दितगौरवज्ञानलाभाय

यद्यपि गौरवज्ञानमात्रं नावच्छेदकत्वधीप्रतिबन्धकं, विशिष्टसत्तात्वस्य द्रव्यत्वत्वापेक्षया गुरुत्वग्रहेपि विशिष्टसत्तानास्तीति प्रतीत्या तदवच्छेदकत्वग्रहस्य प्राच्यैरपि स्वीकृतत्वात्। न च तद्धर्मसमानाधिकरणधर्मधर्मिकः तदपेक्षया लघुत्वग्रहः तद्धर्मस्यावच्छेदकत्वधीप्रतिबन्धकः, नीलधूमत्वसमानाधिकरणधूमत्वे तदपेक्षया लघुत्वग्रहेपि नीलधूमो नास्तीति प्रतीत्या नीलधूमत्वस्यावच्छेदकत्वावगाहनस्य सर्वसम्मतत्वात्।

## लक्ष्मीः

गौरवज्ञानदशायामित्यनुक्त्वा गौरवप्रतिसन्धानदशायामित्युक्तम्। **यादृशप्रतीत्या**। कंबुग्रीवादिमान्नास्तीत्यादिप्रतीत्या। **गुरोः**। कम्बुग्रीवादिमत्वादेः। **अवच्छेदकत्वसिद्धिः**। अवच्छेदकत्वज्ञानम्। **तादृशबुद्धौ**। गुरुधर्मेऽवच्छेदकत्वबुद्धौ। कम्बुग्रीवादिमत्वं प्रतियोगितावच्छेदकमिति बुद्धौ इति यावत्। **गौरवज्ञानस्य**। कम्बुवादिमत्वं घटत्वापेक्षया गुरु इति ज्ञानस्य। **नचैतदस्ति**। गुरुत्वज्ञानस्य तादृशबुद्धौ प्रतिबन्धकत्वमेव नास्ति। गौरवज्ञानं नावच्छेदकत्वधीप्रतिबन्धकमित्याशङ्कते। **यद्यपीत्यादिना**। **गौरवज्ञानमात्रं**। तद्धर्मिककिञ्चिदपेक्षया गुरुत्वज्ञानमात्रं। **नावच्छेदकत्वधीप्रतिबन्धकं**। तद्धर्मिकावच्छेदकत्वबुद्धौ न प्रतिबन्धकं। प्रतिबन्धकत्वाभावे हेतुमाह। **विशिष्टसत्तात्वस्येति**। **तदवच्छेदकत्वग्रहस्य**। विशिष्टसत्तात्वे प्रतियोगितावच्छेदकत्वग्रहस्य। तथा च निरुक्तरीत्या प्रतिबध्यप्रतिबन्धकभावो न संभवतीति भावः। शङ्कते। **न चेति**। **तद्धर्मसमानाधिकरणधर्मधर्मिक इति**। गुरुधर्मसमानाधिकरणलघुधर्मविशेष्यक इत्यर्थः। **तदपेक्षया**। तद्धर्मापेक्षया। **तद्धर्मस्य**। गुरुधर्मस्य। तथा च द्रव्यत्वत्वे विशिष्टसत्तात्वसामानाधिकरण्याभावान्न द्रव्यत्वत्वधर्मिकलघुत्वग्रहो विरोधीति भावः। इत्यपि न संभवतीति समाधत्ते। **नीलधूमत्वेति**। **तदपेक्षया**। नीलधूमत्वापेक्षया। **सर्वसम्मतत्वादिति**। धूमत्वस्यावच्छेदकत्वे पीतधूमवति नीलधूमोनास्तीति प्रतीत्यनुपपत्तेः। **तद्धर्मसमनियतधर्मधर्मिक इति**। गुरुधर्मसम-

नापि तद्धर्मसमनियतधर्मधर्मिक एव तद्धर्मापेक्षया लघुत्वग्रहस्तद्धर्मस्यावच्छेदकत्वधीप्रतिबन्धक इति सांप्रतम्। घटज्ञानत्वापेक्षया लघुनोपि ज्ञानत्वस्य घटज्ञानत्वसमनियतत्वाभावाद् गुरुणोपि घटज्ञानत्वस्य संयोगसंबन्धावच्छिन्नघटज्ञानाभावस्य प्रतियोगितावच्छेदकत्वापत्तेः। तथापि ससर्गमर्यादया प्रतियोगितावच्छेदकत्वग्रहं प्रति तादात्म्येन कम्बुग्रीवादिमत्वरुपस्तत्तद्गुरुधर्मः प्रतिबन्धक इति न कदाचिदपि संसर्गमर्यादया तेष्ववच्छेदकत्व ग्रह इति प्राचां तात्पर्यम्।

वस्तुतः संसर्गमर्यादया कम्बुग्रीवादिमत्वावच्छेद्यप्रतियोगिताकत्वावगाहिज्ञानं प्रति समानविशेष्यताप्रत्यासत्त्या कम्बुग्रीवादिमत्वापेक्षया लघुधर्मावच्छिन्नप्रतियोगिताकत्वज्ञानत्वेनैव प्रतिबन्धकत्वं प्राचामभिप्रेतम्, तथा च जलादौ निर्वन्हित्वस्याऽग्रहदशायां वन्हिमत्त्वभ्रमस्येव उक्तक्रमेण गौरवस्याग्रहदशायामपि कम्बुग्रीवादिमत्वा-

---

## लक्ष्मीः

नियतलघुधर्मधर्मिक इत्यर्थः। तथा च धूमत्वस्य नीलधूमत्वसमनैयत्याभावान्न धूमत्वधर्मिकलघुत्वग्रहो विरोधीति भावः। **इत्यपि न सांप्रतमिति।** न युक्तमित्यर्थः। **घटज्ञानत्वसमनियतत्वाभावादिति।** ज्ञानत्वधर्मिकलघुत्वज्ञानस्याऽविरोधित्वादितिभावः। **तथापीति।** तथा चाऽवच्छेदकत्वसंबन्धेन प्रतियोगिताप्रकारकबुद्धौ तादात्म्येन 'कम्बुग्रीवादिमत्त्वरूप' गुरुधर्मः प्रतिबन्धक इति भावः। ननु गुरुत्वस्य किञ्चित्सापेक्षतया कम्बुग्रीवादिमत्वादेरपि प्रमेयकम्बुग्रीवादिमत्वापेक्षया लघुत्वेन तस्य प्रतिबन्धकत्वानुपपत्तिरत आह। **वस्तुत इति।** तथा च विशेष्यतासंबन्धेन स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्नकम्बुग्रीवादिमत्त्वनिष्ठ - प्रकारताशालिग्रहं प्रति विशेष्यतासंबन्धेन स्वावच्छिन्नप्रतियोगिताकत्वसंबन्धावच्छिन्ना "कम्बुग्रीवादिमत्वापेक्षया" लघुधर्मनिष्ठा प्रकारता तच्छालिज्ञानं प्रतिबन्धकमित्यर्थः। तथा चाभावमात्रे एव प्राचां मते गुरुधर्मावच्छिन्नप्रतियोगिताकत्वज्ञानं न भवतीति भावः। **तथा च।** प्रतिबध्यप्रतिबन्धकभावे च। **वन्हिमत्त्वभ्रमस्येव।** वन्हिप्रकारकभ्रमस्येव। **उक्तक्रमेण।** वस्तुत इति रीत्या। **गौरवस्याऽग्रहदशायामपि** उक्तप्रतिबन्धकज्ञानशून्यकालेपि। **तादृशग्रहः।** कम्बुग्रीवादिमत्त्वाव-

न चाऽस्यास्तत्प्रतियोगिकाभावमात्रमवलम्बनम्। तथाविधयत्किञ्चिद्व्यक्तिसत्वे एव तादृशप्रतीतेरनुदयात्। अत एव एकघटवति भूतले कम्बुग्रीवादिमान्नास्तीति शब्दो न प्रमाणम्, प्रमाणं च घटसामान्यशून्ये।

वच्छिन्नप्रतियोगिताकत्वेन तादृशग्रहो जायते एव। अन्यथा तदानीमुत्पन्नायाः कम्बुग्रीवादिमान्नास्तीति धियो बाधनिश्चयविषया कम्बुग्रीवादिमत्त्वावच्छिन्नविशिष्टधीविरोधित्वानुपपत्तेः। कम्बुग्रीवादिमत्त्वावच्छिन्नस्य विशिष्टबुद्धौ तदवच्छिन्नप्रतियोगिताकत्वेनाभावनिश्चयस्य विरोधित्वादिति ध्येयम्।

प्रतीतेर्वलम्, अवच्छेदकत्वावगाहित्वम्। गुरुरपीति। तथा च स्वरूपसंबन्धरूपावच्छेदकत्वघटितं मूलोक्तं यथाश्रुतव्याप्तिलक्षण सम्यक्। प्रमेयधूमत्वादेस्तादृशावच्छेदकत्वेन व्यभिचारिण्यतिव्याप्तिविरहादिति कृतं पारिभाषिकावच्छेदकत्वनिर्वचनेनेति भावः।

ननूक्तक्रमेण गौरवज्ञानस्य विरोधित्वात्तादृशप्रतीत्याऽवच्छेदकत्वं नावगाह्यते, परन्तु कम्बुवादिमन्निष्ठप्रतियोगिताकाभावमात्रमित्याशङ्क्य निषेधति। **नचेति**। अवलम्बनं। विषयः। **तथाविधेति**। कम्बुग्रीवादिमत्वाश्रयेत्यर्थः। **तादृश-**

## लक्ष्मीः

च्छिन्नप्रतियोगिताकाभावग्रहः। **अन्यथा**। तादृशग्रहानभ्युपगमे। **तदानीं**। निरुक्तगौरवग्रहरूपप्रतिबन्धकविरहकाले। तथा च। गुरुधर्मस्य प्रतियोगितावच्छेदकत्वे च। **कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावमात्रमिति**। तथाचोक्तप्रतीतेरवच्छेदकत्वविषयकत्वमेवाऽसिद्धमिति भावः। **दीधितौ**। **अस्याः**। कम्बुग्रीवादिमान्नास्तीतिप्रतीतेः। **स एव**। तद्घटव्यक्तिनिश्चय एव। **अन्यथा**। तद्घटव्यक्तिनिश्चयस्य तादृशप्रतीत्यप्रतिबन्धकत्वे। **विशेषादर्शनदशायां**। तद्घटव्यक्तिनिश्चयशून्यकाले। **तत्र**। भूतले। कम्बुग्रीवादिमत्वावच्छिन्नप्रतियोगिताकाभावशून्ये। कम्बुग्रीवादिमत्त्वावच्छिन्नप्रतियोगिताकाभावाभाववति एकघटवति भूतले इति यावत्। **अप्रमाणत्वं**।

**प्रतीतेः** । कम्बुग्रीवादिमान्नास्तीति प्रतीतेः । अनुदयादिति । तथा च त्वन्मते कम्बुग्रीवादिमदन्तरस्याभावमादाय तदुदयप्रसंग इति भावः । ननु तथाविधयत्किञ्चिद्व्यक्तिनिर्णये स एव प्रतिबन्धकः । अन्यथा विशेषादर्शनदशायां तवापि कम्बुग्रीवादिमान्नास्तीति प्रतीतिर्जायते एव तत्रेत्यत आह । **अत एवेति** । गुरुधर्मस्यावच्छेदकत्वादेवेत्यर्थः ।

न प्रमाणमिति । कम्बुग्रीवादिमत्वावच्छिन्नप्रतियोगिताकाभावशून्ये कम्बुग्रीवादिमत्वावच्छिन्नप्रतियोगिताकाभावप्रकारकत्वेन तादृशान्वयबोधो भ्रम इति तादृशशब्दस्य भ्रमजनकत्वेनाऽप्रमाणत्वम् । त्वन्मते च कम्बुग्रीवादिमत्प्रतीतेर्न भ्रमत्वमिति तादृशशब्दोप्यप्रमाणं न स्यादित्यर्थः । ननु भ्रमत्वस्य प्रकारभेदेन भिन्नत्वात्सर्वत्र-तदभाववद्विशेष्यकत्वं न भ्रमत्वघटकम्, समवायेन गगनादि भ्रमे तन्निवेशवैयर्थ्यात् । तथा च तत्रैव प्रकृतेपि कंबुग्रीवादिमत्प्रतियोगिकाभावप्रकारतामात्रेण तादृशान्वयबोधो भ्रमो भविष्यतीत्याह प्रमाणञ्चेति । तथा च तत्रापि कम्बुग्रीवादिमान्नास्तीति शब्दः प्रमाण न स्यादित्यकामेनापि भ्रमत्वं तदभाववद्विशेष्यकत्वघटितं वाच्यमिति भावः ।

धूमो न वह्निव्याप्य इत्यादेर्वह्निव्याप्यभावकूटार्थकत्ववत् कम्बुग्रीवादिमान्नास्तीत्यादावपि कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटबोधकत्वादेव तादृशशब्दस्याप्रामाण्या-

---

## लक्ष्मीः

नवीनमते इत्यादिः । **त्वन्मते च** । प्राचीनमते च । **अभावात्** । कम्बुग्रीवादिमद्घटान्तरप्रतियोगिकाभावस्यैव सत्वात् । **तन्निवेशवैयर्थ्यादिति** । गगनाभावस्य केवलान्वयित्वादितिभावः । **प्रमाणं न स्यादिति** । त्वन्मते कम्बुग्रीवादिमन्निष्ठप्रतियोगिताकाभावप्रकारकत्वमात्रस्यैव भ्रमत्वादितिभावः ।

आशङ्कते । **धूमो न व्याप्य इति** । **इत्यादेः** । इत्यादि वाक्यस्य । **वन्हिव्याप्त्यभावकूटार्थकत्ववदिति** । वन्हिव्याप्त्यभावकूटप्रकारकबोधजनकत्ववदित्यर्थः । **कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटबोधकत्वादेवेति** । तत्तत्कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटविषयक बोधजनकत्वादेवेत्यर्थः । एव कारेण यत्किञ्चित्कंबुग्रीवादिमत्प्रतियोगिकाभावविषयकबोधजनकत्वस्य व्यावृतिः । तादृशशब्दस्य यत्किंचिद्

नचदेवं लघुरूपसमनियतानां गुरूणामव्याप्यतापत्तिः, गुणादिगुणकर्मान्यत्वविशिष्टसत्तादिसमानाधिकरणाभावप्रतियोगितावच्छेदकतावन्निष्ठायाः प्रतियोगिताया लाघवेन द्रव्यनिष्ठा-

द्युपपत्तिः, अन्यथा धूमालोकसाधारणानुगतव्याप्तेरभावादालोकगर्भव्याप्तित्वावच्छिन्नाभावस्य धूमे सत्त्वात्तमादाय धूमो न वह्निव्याप्य इति वाक्यस्य प्रामाण्यापत्तेः ।

एवं गुरुधर्मस्यानवच्छेदकतया तादृशधर्मावच्छिन्नविशिष्टबुद्धिं प्रति तादृशधर्माश्रयप्रतियोगिकाभावकूटवत्तानिश्चयत्वेनैवानन्यगत्या विरोधित्वकल्पनात्, कम्बुग्रीवादिमान्नास्तीति प्रतीतिदशायां कम्बुग्रीवादिमदस्तीतिज्ञानविरोधोऽपि घटते इति प्राचीनमतनिर्भरः, अतो गुरुधर्मस्यानवच्छेदकत्वे व्याप्तेरपि दुर्वचत्वमित्याह । नचेदेवमिति । लघ्विति । द्रव्यं गुणाद् विशिष्टसत्त्वाद्वा इत्यादौ द्रव्यत्वसमनियतानां गुणवत्त्वविशिष्टसत्तादीनामित्यर्थः ।

## लक्ष्मीः

घटवति भूतले कम्बुग्रीवादिमान्नास्तीति वाक्यस्य **अप्रामाण्याद्युपपत्तिः** । तादृशघटवति भूतले कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटस्यासत्वात्, कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटाभाववति तादृशाभावकूटप्रकारकबोधजनकत्वात् । घटसामान्य विरहे च तादृशाभावकूटस्य सत्वेन कम्बुग्रीवादिमान्नास्तीति प्रतीतिः प्रामाण्योपपत्तिः । **अन्यथा** । वन्हिव्याप्त्याभावकूटार्थकत्वानभ्युपगमे । **तमादाय** । आलोकनिष्ठवन्हिव्याप्यत्वाभावमादाय । **एवं** । कम्बुग्रीवादिमान्नास्तीति प्रतीतेः कम्बुग्रीवादिमदभावकूटार्थकत्वे । **तादृशधर्मावच्छिन्नविशिष्टबुद्धिं प्रति** । कम्बुग्रीवादिमत्वावच्छिन्नविशिष्टबुद्धिं प्रति । **तादृशधर्माश्रयप्रतियोगिकाभावकूटवत्तानिश्चयत्वेनैवेति** । कम्बुग्रीवादिमत्प्रतियोगिकाभावकूटप्रकारकनिश्चयत्वेनैवेत्यर्थः । एवकारेण कम्बुग्रीवादिमत्प्रतियोगिताकाभावप्रकारकनिश्चयत्वस्य व्यावृत्तिः । **प्राचीनमतनिर्भरः** ।

अव्याप्तिमुपपादयति । गुणादीति । ननु हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वव्यक्तीनां तत्तद्व्यक्तित्वेनाभावकूटवत्वमेव साध्यतावच्छेदकांशे निवेश्यमतो नोक्तदोषोऽतआह । तत्तदिति । यद्यपि गुरोरवच्छेदकत्वपक्षेपि स्वस्वप्रतियोगिव्यधिकरणाभावघटितव्याप्तेस्तत्तत्प्रतियोगितागर्भत्वेन दुर्ज्ञेयत्वम्, तथापि व्याप्यवृत्तिसाध्यकस्थलीयव्याप्तेरभिप्रायेणेदम्, तत्र प्रतियोगिवैयधिकरण्याप्रवेशात् । निरवच्छिन्नहेत्वधिकरणवृत्तिकाभावप्रतियोगितानवच्छेदकत्वमिति तु परमार्थः । तेनाऽव्याप्यवृत्तिसाध्यकस्थलेपि व्याप्तेर्नदुर्ज्ञेयत्वमिति ध्येयम् । द्रव्यत्वत्वेति । द्रव्यनिष्ठाभावप्रतियोगितावच्छेदकत्ववत्वापेक्षया द्रव्यत्वत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वस्य गुरुतया तदवच्छिन्नाभावाप्रसिद्धेरिति भावः ।

## लक्ष्मीः

प्राचीनसिद्धान्तः ।

अतः । गुरोरनवच्छेदकत्वे दोषाभावात् । **नचेदेवमिति** । यदि गुरुधर्मस्य न प्रतियोगितावच्छेदकत्वम् । **लघुरूपसमनियतानामिति** । विशेषणानवच्छिन्नद्रव्यत्वसमनियतानामित्यर्थः । **लाघवेनेति** । गुणत्वावच्छिन्नप्रकारेण हेतुमन्निवेशापेक्षया निर्विशेषणकद्रव्यत्वादिपुरस्कारेण निवेशे लाघवादित्यर्थः । **द्रव्यादिनिष्ठाभावप्रतियोगितावच्छेदकत्वस्यैवेति** । एवकारेण गुणत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वव्यावृत्तिः । तथा च गुणत्वावच्छिन्नवन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकाभावाप्रसिध्याऽव्याप्तिरितिभावः । शङ्कते । नन्विति । **हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वव्याप्तीनामिति** । हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वानि यावन्ति तासामित्यर्थः । **तत्तद्व्यक्तित्वेनाभावकूटवत्वमेवेति** । तत्तत्येकव्यक्तित्वावच्छिन्नप्रतियोगिताकाभावकूटवत्वमेवेत्यर्थः । एवकारेण हेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वत्वावच्छिन्नप्रतियोगिताकाभावव्यावृत्तिः । दीधितौ । **तत्तदवच्छेदकत्वव्यक्तीनामिति** । हेतुसमानाधिकरणभावप्रतियोगितावच्छेदकत्वव्यक्तीनामित्यर्थः । **प्रातिस्विकरूपेण** । तत्तद्व्यक्तित्वेन । **ज्ञातुमशक्यत्वादिति** । अनन्तानां

भावप्रतियोगितावच्छेदकतात्वेनैवावच्छेदात् । तत्तदवच्छेदकत्वव्यक्तीनां च प्रातिस्विकरूपेणाभावानां युगसहस्रेनापि ज्ञातुमशक्यत्वात् ।

एवं द्रव्यत्वादिविशिष्टद्रव्यत्वादेरव्याप्यत्वप्रसंगोप्यनुसन्धेयः ।

उपदर्षितप्रकाराणामपि स्वत्वादिघटितत्वेन दुर्ज्ञेयत्वात् । अत एव घ्राणग्राह्यगुणत्वादिना साध्यतायां द्रव्यत्वादेर्व्यभिचारित्वं साधुसंगच्छते इत्यपि केचिदिति कृतं पल्लवितेन ।

इत्यवच्छेदकत्वनिरुक्तिदीधितिः ।

ननुहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकीभूतयत्किञ्चिद्धर्मावच्छिन्नाभाववदसंबद्ध-स्वविशिष्टसामान्यकभिन्न स्वविशिष्टसंबन्धिनिष्ठाभावप्रतियोगितानवच्छेदकतादृशधर्मभिन्नं वा यत्साध्यतावच्छेदकं तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र, हेतुमन्निष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितासामान्ये यद्धर्मविशिष्टसंबन्धिनिष्ठाभावीयविशेषणताविशेषावच्छिन्नप्रतियोगितानवच्छेदकावच्छेद्यत्वं नास्ति साधने तद्धर्मावच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यत्र वादुर्ज्ञेयत्वाभावात्तथैव-व्याप्तिर्वाच्येत्यत आह उपदर्शितेति । स्वत्वादीति । आदिना व्यापकतापर्यव-

लक्ष्मीः

तादृशावच्छेदकत्वरूपप्रतियोगिव्यक्तीनां तत्तद्व्यक्तित्वेन ज्ञानासंभवादितिभावः । निर्विशेषणकद्रव्यत्वाघटितप्रतियोगितावच्छेदकतात्वापेक्षयाद्रव्यत्वत्वघटिततादृशावच्छेदकतात्वस्य गौरवेणाऽनवच्छेदकत्वनिबन्धनामनुपपत्तिमाह । दीधितौ । एवमिति । रीत्येतिशेषः । द्रव्यत्वत्वादिविशिष्टद्रव्यत्वादेरिति । गुणवान् द्रव्यत्वादित्यत्र द्रव्यत्वादेरित्यर्थः । अनुसन्धेय इति । अतोगुरोरवच्छेदकत्वमावश्यकमितिभावः । तादृशावच्छेदकत्वाभावस्थाने तादृशावच्छेदकभेदवेशे न दुर्ज्ञेयत्वमित्याशंकते । नन्विति । तथा च पारिभाषिका-

सन्नस्य तत्तदवच्छेदकत्वाभावगर्भसामान्यत्वस्योपग्रहः। अत एव। गुरोरवच्छेदकत्वादेव। संगच्छते इति। अन्यथा ग्राह्यगन्धत्वापेक्षया गुरुत्वेन घ्राणग्राह्यगुणत्वावच्छिन्नाभावाप्रसिध्या तद्वृत्तित्वरूपव्यभिचरितत्व तत्र नस्यादितिभावः। यद्यपि साध्यव्यापकतावच्छेदकधर्मावच्छिन्नभाववदवृत्तित्वमेव व्यभिचारः, स च ग्राह्यगन्धत्वावच्छिन्नाभाववदवृत्तित्वेनैव तत्र सुलभ इत्यपि शक्यते वक्तुम्, तथापि तद्बुद्धेःप्रकृतसाध्यकानुमित्यविरोधितया हेत्वाभासता न स्यात् यद्विषयकत्वेन यादृशानुमितिविरोधित्वं तस्यैव तत्र तथात्वादिति भावः।

—:*:—

## इति जगदीशतर्कालङ्कारकृताजागदीशीसमाप्ता।

—:*:—

## लक्ष्मीः

वच्छेदकीभूतं पद्यत्स्वंतत्तद्भेदकूटवत्साध्यतावच्छेदकमित्यादि। **अन्यथा**। गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे। **तत्र**। द्रव्यत्वे। **नस्यादिति**। साध्यतावच्छेदकावच्छिन्नाभाववदवृत्तित्वं हि व्यभिचारः, गुरुधर्मस्यानवच्छेदकत्वे घ्राणग्राह्यगुणत्वाद्यवच्छिन्नप्रतियोगिताकाभावाऽप्रसिध्या तदनुपपत्तेरिति भावः। **साध्यव्यापकतावच्छेदकधर्मावच्छिन्नाभाववदवृत्तिमेवेति**। गुरुधर्मावच्छिन्नसाध्यकस्थलानुरोधेनेति यावत्। **तद्बुद्धेः**। द्रव्यत्वधर्मिकग्राह्यगन्धत्वावच्छिन्न प्रतियोगिताकाभाववदवृत्तित्वनिश्चयस्य। **प्रकृतानुमित्यविरोधितया**। घ्राण ग्राह्यगुणवान् द्रव्यत्वादित्यनुमित्यविरोधितया। एतन्न व्यभिचारज्ञानस्यानुमितिविरोधित्वमतेनेति।

—:०❀०:—

इति दत्तात्रेयशास्त्रिकृता अवच्छेदकत्वनिरुक्तिलक्ष्मीः समाप्ता।

—:०❀०:—